1938.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

[COLLE]CTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 491.



॥ श्रीः ॥

# तन्त्रसारः

[म]हामहोपाध्याय श्रीकृष्णानन्दवागीशभट्टाचार्य विरचितः





FASCICULUS I—१

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE,

*Banaras*

*Registered According to Act XXV of 1867. (A[ll rights reserve]d)*

श्रीगणेशाय नमः ।

महामहोपाध्यायश्रीकृष्णानन्दवागीशभट्टाचार्यविरचित-

# तन्त्रसारः



नत्वा कृष्णपदद्वन्द्वं ब्रह्मादिसुरवन्दितम् ।
गुरुं च ज्ञानदातारं कृष्णानन्देन धीमता ॥ १ ॥
तत्तद्ग्रन्थकृतावाक्यान्ज्ञानार्थं प्रतिपद्य च ।
सौकर्य्यार्थं च संक्षेपात्तन्त्रसारः प्रतन्यते ॥ २ ॥
उच्यते प्रथमं तत्र लक्षणं गुरुशिष्ययोः ॥

तत्र प्रथमं गुरुलक्षणमाह—

शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेषवान् ।
शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥ १ ॥
आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः ।
निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ॥ २ ॥

इति गुरुलक्षणम् ।

ज्ञानार्णवे—

गुरौ मनुष्यबुद्धिश्च मन्त्रे चाक्षरबुद्धिकाम् ।
प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् ॥ १ ॥
जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः ।
गुरुर्विशेषतः पूज्यो धर्म्माधर्म्मप्रदर्शकः ॥ २ ॥
गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः ।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ ३ ॥
गुरु(१)हीनं न कर्तव्यं वाङ्मनःकायकर्मभिः ।
अहिताचरणादेव विष्ठायां जायते कृमिः ॥ ४ ॥
मन्त्रत्यागात् भवेन्मृत्युर्गुरुत्यागात् दरिद्रता ।
गुरुमन्त्रपरित्यागात् रौरवं नरकं व्रजेत् ॥ ५ ॥
गुरौ सन्निहिते यस्तु पूजयेदन्यदेवताम् ।
प्रयाति नरकं घोरं सा पूजा विफला भवेत् ॥ ६ ॥

श्रीक्रमे—

उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।

---

(१) अत्रेदं पाठान्तरम्—गुरोर्हितं प्रकर्तव्यं वाङ्मनःकायकर्मभिः ।
आहिताचरणाद् देवि ! विष्ठायां जायते कृमिः ॥ ४ ॥

तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम् ॥ १ ॥
गुरुवत् गुरुपुत्रेषु गुरुवत् तत्सुतादिषु ॥

आगमकल्पद्रुमे—

अविद्यो वा सविद्यो वा गुरुरेव तु दैवतम् ।
अमार्गस्थोऽपि मार्गस्थो गुरुरेव सदागतिः ॥ १ ॥
आयान्तमग्रतो गच्छेद्गच्छन्तन्तमनुव्रजेत् ।
आसने शयने वापि न तिष्ठेदग्रतो गुरुः ॥ २ ॥
अनुज्ञां प्राप्य तिष्ठेच्च नैवं शापमवाप्नुयात् ।
गुरुर्माता पिता स्वामी बान्धवः सुहृदः शिवः ॥
इत्याधाय मनो नित्यं भजेत्सर्वात्मना गुरुम् ॥ ३ ॥

निन्द्यगुरुमाह क्रियासारसमुच्चये—

श्वित्री चैव गलत्कुष्ठी नेत्ररोगी च वामनः ।
कुनखी श्यावदंतश्च स्त्रीजितोऽप्यधिकांगकः ॥ १ ॥
हीनांगः कर्पटी रोगी बह्वाशी बहुजल्पकः ।
एतैर्दोषैर्विहीनो यः स गुरुः शिष्यसम्मतः ॥ २ ॥

शिष्यलक्षणमाह—

शान्तो विनीतः शुद्धात्मा श्रद्धावान् धारणक्षमः ।
समर्थश्च कुलीनश्च प्राज्ञस्सच्चरितो यती ।
एवमादिगुणैर्युक्तः शिष्यो भवति नान्यथा ॥ १ ॥

निन्द्यशिष्यमाह—

पापिने क्रूरचेष्टाय शठाय कृपणाय च ।
निंदकाय च मूर्खाय तीर्थद्वेषपराय च ॥ १ ॥
भक्तिहीनाय देवेशि ! न देया मलिनाय च ।
गुरुता शिष्यता वापि तयोर्वत्सरवासतः ॥ २ ॥

तथाचोक्तं सारसंग्रहे—

सद्गुरुःस्वाश्रितं शिष्यं वर्षमेकं प्रतीक्षयेत् ।
स्वप्ने तु न कालनियमः स्वप्ने तु नियमो नहि ॥ १ ॥

इति नारदवचनात् । तथाच—

राज्ञि चामात्यजो दोषः पत्नीपापं स्वभर्तरि ।
तथाशिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितम् ॥ १ ॥

देव्यागमे शिववाक्यम्—

गुरुशिष्यासनं यानं पादुकापानपीठकम् ।
स्नानोदकं तथा छायां लङ्घयेन्न कदाचन ॥ १ ॥

गुरोरग्रे पृथक् पूजामौद्धत्यं च विवर्जयेत् ।
दीक्षाव्याख्यां प्रभुत्वं च गुरोरग्रे परित्यजेत् ॥ २ ॥
अविद्यो वा सविद्यो वा गुरुरेव तु दैवतम् ।
वर्षैकेन भवेद्योग्यो विप्रो गुणसमन्वितः ॥ ३ ॥
वर्षद्वयात्तु राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः ।
चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता ॥ ४ ॥
इति शिष्यलक्षणम् ।

तथा च योगिनीतंत्रे—

पितुर्मन्त्रं न गृह्णीयात्तथामातामहस्य च ।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥ १ ॥

तथाच गणेशविमर्षिण्याम्—

यतेर्दीक्षा पितुर्दीक्षा दीक्षा च वनवासिनः ।
विविक्ताश्रमिणो दीक्षा न सा कल्याणदायिका ॥ १ ॥

रुद्रयामले—

न पत्नीं दीक्षयेद्भर्ता न पिता दीक्षयेत्सुताम् ।
न पुत्रं च तथा भ्राता भ्रातरं नैव दीक्षयेत् ॥ १ ॥
सिद्धमंत्रो यदि पतिस्तदा पत्नीं स दीक्षयेत् ।
शक्तित्वेन वरारोहे ! न च सा पुत्रिका भवेत् ॥ २ ॥
मंत्राणां देवता ज्ञेया देवता गुरुरूपिणी ।
तेषां निन्दा न कर्तव्या यदीच्छेच्छुभमात्मनः ॥ ३ ॥
गुरुसन्निहिते यस्तु पूजयेदग्रतो न तम् ।
स दुर्गतिमवाप्नोति पूजा च विफला भवेत् ॥ ४ ॥

इत्यादिनिषेधवचनादेभ्यो मन्त्रं न गृह्णीयात्; इदं तु सिद्धेतरविषयम् । 'सिद्धमन्त्रे न दुष्यति' इति वचनात् ।

तथाच सिद्धयामले—

यदि भाग्यवशाद्देवि ! सिद्धविद्यां लभेत प्रिये ।
तदैव तां तु गृह्णीयात् त्यक्त्वा गुरुविचिन्तनम् ॥ १ ॥

तथाच—

प्रमादाच्च तथाज्ञानात् पितुर्दीक्षां समाचरन् ।
प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् ॥ १ ॥

पितुरित्युपलक्षणं मातामहादीनामपि । प्रायश्चित्तन्तु अयुतसावित्रीजपः । सर्वत्र तथा दर्शनात् ।

दशसाहस्रजाप्येन सर्वकल्मषनाशिनी ।

तथाच मत्स्यसूक्ते—

निर्वीर्यं तु पितुर्मन्त्रं शैवे शाक्ते न दुष्यति ॥

इति वचनं कौलिकमंत्रदीक्षापरम् । योगिनीतन्त्रे शक्तिविद्यामधिकृत्य दीक्षानिषेधात् ; यद्वा शाक्ते तारादिविद्यायाम् ॥

मत्स्यसूक्ते—

निजकुलतिलकाय ज्येष्ठपुत्राय दद्यात् ॥

श्रीक्रमे—

मनुर्विमृष्य दातव्यो ज्येष्ठपुत्राय धीमते ॥

महातीर्थे उपरागे सति सर्वत्र न दोषः । तथाच विष्णुमन्त्रमधिकृत्य—

साधु पृष्टं त्वया ब्रह्मन् ! वक्ष्यामि सकलं तव ।
ब्रह्मणा कथितं पूर्वं वसिष्ठाय महात्मने ॥ १ ॥
विशिष्ठोऽपि स्वपौत्राय मत्पित्रे दत्तवान् स्वयम् ।
प्रसन्नहृदयः स्वच्छः पिता मे करुणानिधिः ॥
कुरुक्षेत्रे महातीर्थे सूर्य्यपर्वणि दत्तवान् ॥ २ ॥

इत्यादि वैशंपायनसंहितायां शौनकं प्रति व्यासवाक्यम् ।

योगिनीतंत्रे—

निर्बीजं च पितुर्मन्त्रं तथा मातामहस्य च ।
स्वप्नलब्धं स्त्रिया दत्तं संस्कारेणैव शुद्धयति ॥ १ ॥

यत्तु—

साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया ।
सर्वमंत्रार्थतत्वज्ञा सुशीला पूजने रता ॥ १ ॥
गुरुयोग्या भवेत्सा हि विधवा परिवर्जिता ।
स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणास्मृता ॥ २ ॥

इदं तु उपासितमंत्रपरम् । तथाच भैरवतन्त्रे—

स्वीयमंत्रोपदेशे तु न कुर्याद्गुरुचिन्तनम् ॥

मातुरिति उपासिते त्वष्टगुणम्, अनुपासिते शुभफलमित्यर्थः । सिद्धमन्त्रविषयं वेति केचित् ।

वस्तुतस्तु योगिनीहृदये च-स्त्रीपदं विधवापरम्; एकवाक्यताबलात् ।

स्वप्नलब्धे तु कलशे गुरुः प्राणं निवेशयेत् ।
वटपत्रे कुंकुमेन लिखित्वा ग्रहणं शुभम् ॥
ततः शुद्धिमवाप्नोति ; चान्यथा विफलं भवेत् ॥ १ ॥

इदं तु सद्गुरोरभावे ।

तत्संभवे-'तस्मादेव च गृह्णीयात्' 'स्वप्ने तु नियमो नहि' इति नारदवचनात् ।

वैष्णवे वैष्णवो ग्राह्यः शैवे शैवश्च शक्तिके ।
शैवः शाक्तश्च सर्वत्र दीक्षास्वामी न संशयः ॥ १ ॥

तथा विद्याधराचार्य्योद्धृतम्—

मध्यदेशे कुरुक्षेत्रनाटकेकिलसंभवाः ।
अन्तर्वेदिप्रतिष्ठां च आवन्त्याश्च गुरूत्तमाः ॥ १ ॥
मध्यदेशः—आर्य्यावर्तः ।
गौडाः शाल्वोद्भवाश्चैव मागधाः केवलास्तथा ॥
कोशलाश्च दशार्णाश्च गुरवः सप्त मध्यमाः ॥ २ ॥
कार्णाटनर्म्मदाराष्ट्रकच्छातीरोद्भवास्तथा ।
कलिङ्गाश्च कलम्बाश्च काम्बोजाश्चाधमा मताः ॥ ३ ॥

दीक्षां विना जपस्य दुष्टत्वात्प्रथमं सा निरूप्यते—

दिव्यज्ञानं यतो दद्यात् कुर्य्याच्च पापसंक्षयम् ।
तस्माद्दीक्षेति सा प्रोक्ता मनुभिस्तन्त्रवेदिभिः ॥ १ ॥

सर्व्वाश्रमेषु दीक्षायामावश्यकत्वम् । तथाच—

दीक्षामूलं जपं सर्वं दीक्षामूलं परं तपः ।
दीक्षामाश्रित्य निवसेद्यत्र कुत्राश्रमे वसन् ॥ १ ॥

शूद्रस्य निषेधमाह तन्त्रान्तरे—

प्रणवाद्यं न दातव्यं मन्त्रं शूद्राय सर्वथा ।
आत्मतन्त्रगुरोर्मन्त्रं मन्त्रं च जपसंज्ञकम् ॥ १ ॥
शूद्रो निरयमाप्नोति ब्राह्मणो जात्यधोगतिम् ।
अदीक्षता ये कुर्वन्ति जपपूजादिकाः क्रियाः ॥
न भवन्ति प्रिये ! तेषां शिलायामुप्तबीजवत् ॥ २ ॥
देवीदीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात्सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥ ३ ॥
अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत् ॥
तस्माद्दीक्षां प्रयत्नेन सदा कुर्य्याच्च तान्त्रिकाम् ॥ ४ ॥
कल्पे दृष्ट्वा तु मंत्रं वै यो गृह्णाति नराधमः ।
मन्वन्तरसहस्रेषु निष्कृतिर्नैव जायते ॥ ५ ॥
न दीक्षितस्य कार्य्यं स्यात्तपोभिर्न्नियमैर्व्रतैः ।
न तीर्थगमनेनापि न च सा वीरयन्त्रणैः ॥ ६ ॥

अतः सद्गुरुवाहितदीक्षा सर्वकर्माणि साधयेत्, तत्राऽप्यनुकूलं मन्त्रं गृह्णीयात् । तथाच—

स्वभावराशिकोष्ठानामनुकूलान्भजेन्मनून् ॥

वाराहितन्त्रे—

तारचक्रं राशिचक्रं नामचक्रं तथैव च।
तत्र चेत्सगुणो मन्त्रं नान्यचक्रं विचारयेत् ॥ १ ॥

इति तु प्राधान्यतया बोद्धव्यम्। तथा "ऋणिमंत्रं न गृह्णीयादकुलं च तथैवच" इत्यादिदर्शनात्तत्तच्चक्रस्यावश्यकत्वात्प्रथमं तन्निरूप्यते; तत्र सिद्धिसारस्वते—

नृसिंहार्कवराहाणां प्रासादप्रवणस्य च।
सपिण्डाक्षरमन्त्राणां सिद्धादीन्नैव शोधयेत् ॥ १ ॥
स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे च त्र्यक्षरे।
वैदिकेषु च मंत्रेषु सिद्धादिन्नैव शोधयेत् ॥ २ ॥
एकाक्षरस्य मन्त्रस्य मालामन्त्रस्य पार्वति!।
वैदिकस्य च मन्त्रस्य सिद्धादिन्नैव शोधयेत् ॥ ३ ॥
विंशत्यर्णाधिका मन्त्रा मालामन्त्राः प्रकीर्तिताः।
नपुंसकस्य च मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥ ४ ॥
हंसस्याष्टाक्षरस्यापि तथापञ्चाक्षरस्य च।
एकाद्रित्र्यादिबीजस्य सिद्धादीन्नैव शोधयेत ॥ ५ ॥

चामुण्डातन्त्रे—

काली तारा महाविद्या षोडशी भुवनेश्वरी।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥ १ ॥
बगला सिद्धविद्या च मातङ्गी कमलात्मिका।
एता दश महाविद्या सिद्धविद्या प्रकीर्तिता ॥ २ ॥

नात्र सिद्धाद्यपेक्षास्ति। नक्षत्रादिविचारणा—

कालादशोधनं नास्ति न चामित्रादिदूषणम्।
सिद्धावद्यतया नात्र युगसेवापरिश्रमः॥
नास्ति किंचिन्महादेवि! दुःखसाध्यं कथंचन ॥ ३ ॥

इत्यादिवचनादेषु विचारो नास्ति। वस्तुतस्त्विदं प्रशंसापरम्। सर्वत्र विचारस्यावश्यकत्वम्। दुरदृष्टिवशात्कदाचिद्वैरिमन्त्रस्य स्वप्नादा प्राप्त्या तत्तद्दोषस्य दृष्टत्वादिति तु सांप्रदायिकाः। तत्र—

कुलाकुलस्य भेदं हि वक्ष्यामि मन्त्रिणामिह।

तथाच निबन्धे—

वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्।
पञ्च ह्रस्वाः पञ्चदीर्घाबिन्द्वन्ताः सन्धिसंभवाः ॥ १ ॥
काद्यः पंचशः षक्षलसहान्ता समीरिताः। अआएकचटतपयषामारुताः॥

इई ऐखछठथफवक्षाआग्नेयाः । उऊओ गजडदवनलापार्थिवाः ।
ऋॠऔघझढभवसावारुणाः । ऌॡ अंअःङञणनमशहानाभसाः ।

साधकस्याक्षरं पूर्वं मन्त्रस्यापि तदक्षरम् ।
यद्येकभूतदैवत्यं जानीयात्स्वकुलं हि तत् ॥ १ ॥
भौमस्य वारुणं मित्रम् आग्नेयस्यापि मारुतम् ।
मारुतः पार्थिवानाञ्च शत्रुराग्नेयमम्भसाम् ॥ २ ॥

चकारादाग्नेयपार्थिवानाञ्च शत्रुः ।

तथाच रुद्रयामले—

पार्थिवे वारुणं मित्रं तैजसं शत्रुरीरितम् ॥

इत्यादिनाभसंसर्वमित्रं स्याद्विरुद्धं नैव शीलयेत् ।

इति कुलाकुलविचारः ।

---

## अथ राशिचक्रम्—

आगमकल्पद्रुमे—

रेखाद्वयं पूर्वपरेण कुर्य्यात्तन्मध्यतो याम्यकुबेरभेदात् ।
एकैकमीशाननिशाचरेषु हुताशवाय्वोर्व्विलिखेत्ततोऽर्णान् ॥१॥

४ वेदाग्नि ३ वह्नि ३ युगल २ श्रवण २ क्षि २ संख्यान् ५ पंचेषु ५ बाण ५ शर ५ पञ्च ५ चतुष्टयार्णान् ।

मेषादितः प्रविलिखेत्सकलांस्तु वर्णान् ।
कन्यागतान्प्रविलिखेदवशिष्टवर्णा ॥ १ ॥

अआइईमेषः । उऊऋवृषभः । ॠऌॡमिथुनः । एऐकर्कटः । ओऔसिंहः । अंअः शषसहलक्षाः कन्यका । कवर्गस्तुला । चवर्गो वृश्चिकः । टवर्गो धनुः । तवर्गो मकरः । पवर्गकुम्भः । यवर्गो मीनः । स्वराशीनामनुकूलं मन्त्रमभजेत् । तथाच—'राशिकोष्ठानामनुकूलान् भजन्मनून्' इतिवचनात् ।

राशीनां शुद्धता ज्ञेया त्यजेच्छत्रुं मृतिं व्ययम् ।
स्वराशेर्म्मंत्रराश्यन्तं गणनीयं विचक्षणैः ॥ १ ॥

यदा तु स्वराशेरज्ञानम्; तदा साधकनामाद्यक्षरसम्बन्धि तं राशिं गृहीत्वा साध्याक्षरराश्यन्तं गणयेत् । 'साधकाक्षरादि'ति रामार्च्चनचन्द्रिकाधृतवचनात् । नारायणीये च ।
'अज्ञाते राशिनक्षत्रे नामाद्यक्षरराशित'इति ॥ रामार्च्चनचन्द्रिकायाम्—

एकपञ्चनवबान्धवाःस्मृताः द्वौ च षट् च दशमाश्च सेवकाः ।
बाहुरुद्रमुनयस्तु पोषका द्वादशाष्टचतुरस्तु घातकाः ॥ १ ॥

इति विष्णुविषयम् ; रामार्च्चनचन्द्रिकाधृतत्वात्। शक्त्यादौ षष्ठं च वर्ज्जनीयम् ; 'षष्ठाष्टमद्वादशानि वर्ज्जनीयानि यत्नत' इतिवचनात्। तन्त्रान्तरे—

लग्नं धनं भ्रातृबन्धुपुत्रशत्रुकलत्रकाः।
मरणं धर्म्मकर्म्मायव्ययद्वादशराशयः॥
नामानुरूपमेतेषां शुभाशुभफलं दिशेत॥ १॥

वैष्णवे तु शत्रुस्थाने बन्धुः, बन्धुस्थाने शत्रुरिति पाठः। तथाच तन्त्रराजे—

तेन मन्त्रादिवर्णेन नाम्ना चाद्यक्षरेण च।
गणयेद्यदि षष्ठं वाप्यष्टमं द्वादशार्णवा॥
रिपुर्म्मन्त्राद्यवर्णास्योक्तेन तस्याहितं भवेत्॥ १॥

इति राशिचक्रम्।

---

अथ नक्षत्रचक्रम्—

अआअश्विनीदेवगणः। इभरणीमानुषः। ईउऊकृतिकाराक्षसः। ऋॠऌॡ रोहिणीमानुषः। एमृगशिरोदेवः। ऐआर्द्रामानुषः। ओपुनर्व्वसुदेवः। कः पुष्यो देवः। खगअश्लेषाराक्षसः। घङमघाराक्षसः। चपूर्वाफल्गुनी मानुषः। छजउत्तराफाल्गुनीमानुषः। झञहस्तादेवः। टठचित्राराक्षसः। डस्वातीदेवः। ढणविशाखाराक्षसः। तथद अनुराधादेवः। धज्येष्ठाराक्षसः। नपफमूलाराक्षसः। बपूर्वाषाढामानुषः। भउत्तराषाढामानुषः। मश्रवणादेवः। यरधनिष्ठाराक्षसः। लशतभिषाराक्षसः। वशपूर्वाभाद्रपदामानुषः। षसहउत्तराभाद्रपदामानुषः। अंअःलंक्ष रेवती देवः(१)।

तथाच पिंगलातन्त्रे—

उत्तरादक्षिणाग्रांतु रेखां कुर्य्याच्चतुष्टयीम्।
दश रेखा पश्चिमाग्रा कर्त्तव्या वरवर्णिनि!॥ १॥
अश्विन्यादिक्रमेणैव विलिखेत्तारकापुनः।

---

(१) निबन्धे क्वचिद्ग्रन्थेऽयं पाठोऽत्र दृश्यते—

पापलोभाल्पेटुप्राज्यं रुद्रूह्याद्रिरुक् करम्।
लोकलोपपटुप्रायं खलौघोभेषु भेदिता॥
वर्णात् क्रमात्स्वरान्त्यौ तु रेवत्यंशगतौ तदा॥ १॥

अकारादिक्षकारान्तान्कोष्ठे वर्णान् लिखेत्क्रमात् ॥
वक्ष्यमाणविधानेन तन्मध्ये वर्णकान् लिखेत् ॥ २ ॥
पक्षैरक१त्र्य३ब्धि४रूपा१वनि१भुज२शशि१युक्यु२ग्म२भू१युग्म२पक्षा·
२युग्मैरक१द्वि२त्रि३रूप१त्र्य३वनि१शशिवै१भू१द्वये२क१पक्षा२ग्नि३त्रेदाः ४।
वर्णान् क्रमात्स्वरान्त्यौ तु रेवत्यंशगताः सदा ॥

तथाच निबन्धे—

पूर्वोत्तरात्र पंचैव भरण्यार्द्रा च रोहिणी ।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥ १ ॥
ज्येष्ठाशतभिषामूलधनिष्ठाश्लेषकृत्तिका ।
चित्रामघाविशाखास्युस्तारा राक्षसदेवताः ॥ २ ॥
अश्विनीरेवतीपुष्यस्वातिहस्तपुनर्वसुः ।
अनुराधामृगशिरः श्रवणादेवतारकाः ॥ ३ ॥

तथाच—

स्वजातौ परमाप्रीतिर्मध्यमा भिन्नजातिषु ।
देवराक्षसयोर्वैरं नाशो मानुषराक्षसः ॥ १ ॥
जन्म सम्पद्विपत्क्षेम प्रत्यरिः साधको वधः ।
मित्रं परममित्रं च जन्मादीनि पुनः पुनः ॥ २ ॥

जन्मतृतीयपञ्चमसप्तमानि वर्जनीयानि नक्षत्राणि । तथा च—

रसाष्टनवभद्राणि युगयुग्मगतान्यपि ।
इतराणि न भद्राणि परित्याज्यो मनीषिभिः ॥ १ ॥

इत्यादि । स्वनक्षत्रादेव नक्षत्रं गणनीयम् । स्वनक्षत्राज्ञाने स्वनामाद्यक्षरसम्बधिनक्षत्रादेव नक्षत्रं गणनीयमिति । प्रादक्षिण्येन नक्षत्रं गणनीयम । तथाच—

प्रादक्षिण्येन गणयेत्साधकाद्यरात्सुधीः ।
प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो भवेत् ॥
प्रनष्टं जन्मनक्षत्रं तस्य नामर्क्षतो भवेत ॥ १ ॥ इति ।

इति नक्षत्रचक्रम् ।

---

## अथ अकथहमचक्रम्—

चतुरस्रे लिखेद्वर्णाश्चतुष्कोष्ठसमन्विते ॥
चतुष्कोष्ठे चतुष्कोष्ठे षोडशकोष्ठ इति यावत ।
चतुरस्रं लिखेत्कोष्ठं चतुष्कोष्ठसमन्वितम् ।
पुनश्चतुष्कं तत्रापि लि द्धीमान् क्रमेण तु ॥ १ ॥

इति विश्वसारवचनात्। तत्र षोडशकोष्ठे अकारादिवर्णान् प्रादक्षिण्येन लिखेत्। तत्र क्रमः—

इन्द्राग्निरुद्रनवनेत्रयुगार्कदिक्षु-
ऋत्वष्टषोडश चतुर्द्दशभौतिकेषु।
पातालपञ्चदशवह्निहिमांशुकोष्ठे
वर्णान् लिखेल्लिपि भवान् क्रमसस्तु धीमान्॥ १॥
नामाद्यक्षरमारभ्य यावन्मंत्रादिमाक्षरम्।
चतुर्भिः कोष्ठैरेकैकमिति कोष्ठचतुष्टयम्॥
पुनः कोष्ठककोष्ठेषु सव्यतो नाम आदितः॥ २॥

सव्यतो-दक्षिणतः; तथाच विश्वसारे—

दक्षिणावर्त्तयोगेन कोष्ठे वर्णान् लिखेत्क्रमात्।
येनैव लेखनं कुर्यात्तेनैव गणनं स्मृतम्॥ १॥
सिद्धः साध्यः सुसिद्धोऽरिः क्रमाज्ज्ञेयो विचक्षणैः।
सिद्धः सिद्ध्यति कालेन साध्यस्तु जपहोमतः॥
सुसिद्धो ग्रहणादेव रिपुर्म्मूलं निकृन्तति॥ २॥
सिद्धार्णो बान्धवाः प्रोक्ताः साध्यास्ते सेवकाः स्मृताः।
सुसिद्धाः पोषकाः ज्ञेयाः शत्रवो घातकाः स्मृताः॥ ३॥
जपेन बंधुः सिद्धः स्यात् सेवकोऽधिकसेवया।
पुष्णाति पोषकोऽभीष्टं घातको नाशयेद्ध्रुवम्॥ ४॥

विशेषफलमाह—

सिद्धः साध्यो यथोक्तेन द्विगुणात् सिद्धसाध्यकः।
सिद्धः सुसिद्धोऽर्द्धजपात् सिद्धारिर्हन्ति बांधवान्॥ १॥
साध्यः सिद्धो द्विगुणकः साध्यसाध्यो निरर्थकः।
तत्सुसिद्धो द्विगुणजपात्साध्यारिर्हन्ति गोत्रजान्॥ २॥
सुसिद्धः सिद्धोऽर्द्धजपात् तत्साध्यो द्विगुणाधिकात्।
तत्सुसिद्धो ग्रहादेव सुसिद्धोऽरिः स्वगोत्रहा॥ ३॥
अरिसिद्धः सुतान् हन्यादरिः साध्यस्तु कन्यकाः।
तत्सुसिद्धस्तु पत्नीघ्नस्तदरिर्हन्ति साधकम्॥ ४॥

पिङ्गलायाम्—

एषु दोषेषु सर्वत्र मायां काममथापि वा।
क्षिप्त्वा चादौ श्रियं दद्यात्तद्दूषणविमुक्तये॥ १॥

वैरिमन्त्रत्यागे प्रकारमाह तन्त्रे—

गवां क्षीरं द्रोणमिते जपेन्मंत्रशताष्टकम्।

पीत्वा क्षीरं जले तद्वत् समुच्चार्य्य त्यजेत्तथा ॥
अनेनैव विधानेन वैरिमंत्राद्विमुच्यते ॥ १ ॥

रुद्रयामले—
वटपत्रे लिखित्वारिं मंत्रं श्रोत्रे विनिःक्षिपेत् ।
एवं मंत्रविमुक्तः स्यादित्याह भगवान् शिवः ॥ १ ॥

इति अकथहमचक्रम् ।

---

## अथाकडमचक्रम्—

रेखाद्वयं पूर्वपरेण कुर्य्यात्तन्मध्यतो याम्यकुबेरभेदात् ।
महेशरक्षोऽधिपतिः क्रमेण तिर्य्यक् तथा वायुहुताशनेन ॥ १ ॥
अकारादिक्षकारान्तान् क्लीबहीनान् लिखेत्क्रमात् ।
एकैकक्रमतो लेख्यान्मेषादिषुवृषान्तकान् ।
गणयेत्क्रमशो भद्रे ! नामादीनपि वर्णकान् ॥ २ ॥
मेषादितो हि मीनान्तं गणयेत् क्रमशः सुधीः ।
आद्यन्तु नामतो मन्त्री याचेन्मन्त्रादिमाक्षरम् ।
सिद्धः साध्यः सुसिद्धारीन् पुनः सिद्धादयः पुनः ॥ ३ ॥
नवैकपंचमे सिद्धः साध्यः षड्दशयुग्मके ।
सुसिद्धस्त्रिसप्तके रुद्रे वेदाष्टद्वादशे रिपुः ॥
एतत्ते कथितं देवि ! अकडमादिकमुत्तमम् ॥ ४ ॥

इदन्तु गोपालविषयकमेव ; 'गोपाले अकडमस्मृतः' इतियामल-वचनात् । शिवविषयेऽपि—

वैष्णवं राशिसंशुद्धं शैवं चाकडमस्मृतम् ।

इति जामलीयवचनात् ।

इति अकडमचक्रम् ।

---

## अथऋणिधनिचक्रम्—

अथ मन्त्रस्य साधकस्य च कथम् ? ऋणऋणीभाव इति पार्वती शंकरमपृच्छत् । तदुक्तं तन्त्रराजे । पार्वत्युवाच—

अथ ऋणित्वं मन्त्राणां साधकानां च मे वद ।
पूर्वजन्मकृताभ्यासपापादस्याफलात्मिका ॥ १ ॥
मन्त्रसम्प्राप्तिमात्रेण प्राक्तनः सिद्धये भवेत् ।
सिद्धमन्त्राद्गुरोर्लब्धमन्त्रो यः सिद्धिवान्नरः ॥ २ ॥

तद्यथा—

कोष्ठान्येकादशान्येव वेदेन पूरितानि च।
अकारादिहकारान्तं लिखेत्कोष्ठेषु तत्त्ववित् ॥ १ ॥
प्रथमं पंचकोष्ठेषु ह्रस्वदीर्घक्रमेण तु।
द्वयं द्वयं लिखेत्तत्र विचारे खलु साधकः ॥
शेषेष्वेकैकशो वर्णान् क्रमतस्तु लिखेत्सुधीः ॥ २ ॥
षट्कालकालविपदग्निसमुद्रवेद-
खाकाशशून्यदहनाः खलु साध्यवर्णाः।
युग्मब्धि चवियदम्बरयुक्शशांक-
व्योमाब्धिवेदशशिनः खलु साधकार्णाः ॥ १ ॥
नामा(१)झलादकठवाद्रजभुक्तशेषं
ज्ञात्वोभयोरधिकेशेषमृणं धनं स्यात् ॥ २ ॥

अस्यार्थः-साध्यवर्णान् स्वरव्यंजनरूपेण पृथक् कृतान् षट्कालकालाद्यङ्कैर्गुणितान् कृत्वा तथा साधकनामाद्यक्षराणि स्वरव्यञ्जनरूपेण पृथक् कृतानि युग्माद्यैरङ्कैर्गुणयित्वा अष्टसंख्याभिर्हृत्त्वा उभयोः साध्यसाधकयोरधिकं ऋणं; शेषं धनं ज्ञात्वा मंत्रं दद्यात्। यदा मंत्रश्चेद्, ऋणीभवति तदा मंत्रः शुभदायको भवतिः धनीचेन्न।

तन्त्रान्तरे—

मंत्रस्त्वृणीशुभफलो ह्यशुभोधनी च।
तुल्यं यदा समफलः कथितो मुनीन्द्रैः ॥१॥

अन्यत्र—

शून्ये मृत्युमवाप्नोति धने च विफलं भवेत्।
ऋणे तु प्राप्तिमात्रे च सर्वसिद्धिस्तु जायते ॥ १ ॥

तथा च रुद्रयामले—

मंत्रो यद्यधिकाङ्कः स्यात्तदा मन्त्रं जपेत्सुधीः।
समेऽपि च जपेन्मंत्रं न जपेत्तु ऋणाधिकम् ॥
शून्ये मृत्युं विजानीयात्तस्माच्छून्यं विवर्जयेत् ॥ १ ॥

तथाच—

इन्द्रर्क्षनेत्ररविपंचदशर्तुवेदवह्न्यायुधाष्टनवभिर्गुणितांश्च साध्यान्।
दिग्भूगिरिश्रुतिगजाग्निमुनीषुवेदषड्वह्निभिस्तु गुणितानथ साध्यकार्णान्॥१॥
इत्यादिवचनं तु विष्णुविषयम्; रामार्चनचन्द्रिकाधृतत्वादितिकेचित्।

---

(१) अत्र 'ज्वालादकवराकुजभुक्तशेषम्' इति पाठान्तरम्।

वस्तुतस्तु पूर्वस्यैव विवरणमेतत्—'हृतशेषं षट्कालेत्यादि' ।
तथाहि-इन्द्रदहनेत्रेत्याद्यनन्तरम्—

नामार्णकोष्ठांकमयाभिहन्यादेकादिरुद्रांकगतं क्रमेण ॥

व्यक्तं हि रुद्रयामले—

साध्याङ्कान् साधकाङ्कांश्च पूरयेद्ग्रहसंख्यया ।
गुणितेष्टकृताङ्कानां यच्छेषं जायते स्फुटम् ॥
तदेकं कथयाऽत्र एकादशगृहस्थितम् ॥ १ ॥

इत्युक्त्वा षट्कालेत्याद्युक्तम् । प्रकारान्तरं यथा—

नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ।
त्रिधा कृत्वा स्वरैर्भिद्यात्तदन्यद्विपरीतकम् ॥ १ ॥

अस्यार्थः—साधकनामाद्यक्षरतो गणनया । यावन्मन्त्रादिमाक्षरं तावत्संख्यं त्रिधा कृत्वा सप्तभिर्हृत्वा अधिकमृणम्; शेषं धनं स्यात् । तदन्यदिति-मन्त्राद्यक्षरमारभ्य यावत्साधकाद्यक्षरं भवेत् तावत्संख्यं सप्तगुणं कृत्वा त्रिभिर्हरेत् ।

अन्यच्च—

साध्यनामद्विगुणितं साधकेन समन्वितम् ।
अष्टभिस्तुहरेच्छेषं तदन्यद्विपरीतकम् ॥ १ ॥

अस्यार्थः—साध्यनामस्वरव्यञ्जनभेदेन द्विगुणीकृत्य साधकनाम्ना स्वरव्यञ्जनभेदेन मिलितं कृत्वा अष्टभिर्हरेत् । तदन्यदिति-साधकनामस्वरव्यञ्जनभेदेन द्विगुणीकृत्य साध्ययुक्तं कृत्वा अष्टभिर्हरेत् ॥

सनत्कुमारीये-

पितृमातृकृतं नाम त्यक्त्वा शर्म्मादिदेवकान् ।
श्रीवर्णञ्च ततो विद्वान् चक्रेषु योजयेत्क्रमात् ॥ १ ॥

इति ऋणिधनिचक्रम् ।

---

## अथ दीक्षाकालः—

मन्त्रारम्भस्तु चैत्रे स्यात् समस्तपुरुषार्थदः ।
वैशाखे रत्नलाभः स्याज्ज्येष्ठे तु मरणं भवेत् ॥ १ ॥
आषाढे बन्धुनाशः स्यात् पूर्णार्थः श्रावणे भवेत् ।
प्रजानाशो भवेद्भाद्रे आश्विने रत्नसञ्चयः ॥ २ ॥
कार्तिके मंत्रसिद्धिः स्यान्मार्गशीर्षे तथा भवेत् ।
पौषे तु शत्रुपीडा स्यान्माघे मेधाविवर्द्धनम् ॥

फाल्गुने सर्वकामाः स्युर्म्मलमासं विवर्जयेत् ॥ ३ ॥

चैत्रे तु गोपालविषयम्; गौतमयुक्तत्वात्। 'मधुमासे भवेद्दीक्षादुःखाय' इतिवचनान्नान्यत्र। तत्र मासः सौर एव।

'सौरे मासि शुभा दीक्षा न चांद्रे न च तारके'

इतिगौतमीयात्।

अथ वारनियमः—

रविवारे भवेद्वित्तं सोमे शांतिर्भवेत्किल।
आयुरङ्गारके हन्ति तत्र दीक्षां विवर्ज्जयेत् ॥ १ ॥
बुधे सौन्दर्य्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ।
शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ॥ २ ॥

अथ तिथिनिर्णय आगमकल्पद्रुमे—

प्रतिपत्सु कृता दीक्षा ज्ञाननाशकरी मता।
प्रतिपत्तिर्द्वितीयायां तृतीयायां शुचिर्भवेत् ॥ १ ॥
चतुर्थ्यां वित्तनाशः स्यात्पंचम्यां बुद्धिवर्द्धनम्।
षष्ठ्यां ज्ञानक्षयं सौख्यं लभते सप्तमीदिने ॥ २ ॥
अष्टम्यां बुद्धिनाशः स्यान्नवम्यां वपुषः क्षयः।
दशम्यां राजसौभाग्यमेकादश्यां शुचिर्भवेत् ॥ ३ ॥
द्वादश्यां सर्वसिद्धिः स्यात्त्रयोदश्यां दरिद्रता।
तिर्य्यंग्योनिश्चतुर्द्दश्यां कृमिर्मासावसानके ॥ ४ ॥
पक्षान्ते धर्म्मबुद्धिः स्यादस्वाध्यायं विवर्जयेत्।
संध्यागर्ज्जितनिर्घोषभूकम्पोल्कानिपातने
एतानन्यांश्च दिवसान् श्रुत्युक्तान् परिवर्ज्जयेत् ॥ ५ ॥
द्वितीया पचमी चैव षष्ठीचैव विशेषतः।
द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वा ॥ १ ॥

इति यत्षष्ठीत्रयोदशीविधानं तद्विष्णुविषयम्, रामार्च्चनचंद्रिकाधृतत्वात्।

पंचमीसप्तमीषष्ठी द्वितीयापूर्णमासी च।
त्रयोदशी च दशमी प्रशस्ता सर्वकामदा ॥ ६ ॥

इतिसनत्कुमारवचनात्।

अथ नक्षत्रनिर्णयः—

अश्विन्यां सुखमाप्नोति भरण्यां मरणं भवेत्।
कृत्तिकायां भवेद्दुःखी रोहिण्यां वाक्पतिर्भवेत् ॥ १ ॥
मृगशीर्षे सुखावा‍‍ा राद्रायां बन्धुनाशनम्।

पुनर्वसौ धनाढ्यः स्यात्पुष्ये शत्रुविनाशनम् ॥ २ ॥
आश्लेषायां भवेन्मृत्युर्म्मघायां दुःखमोचनम् ।
सौन्दर्य्यं पूर्वाफाल्गुन्यां प्राप्नोति न च संशयः ॥ ३ ॥
ज्ञानं चोत्तरफाल्गुन्यां हस्तायां च धनी भवेत् ।
चित्रायां ज्ञानसिद्धिः स्यात् स्वात्यां शत्रुविनाशनम् ॥ ४ ॥
विशाखायां सुखं चानुराधायां बन्धुवर्द्धनम् ।
ज्येष्ठायां सुतहानिः स्यान्मूलायां कीर्त्तिवर्द्धनम् ॥ ५ ॥
पूर्वाषाढोत्तराषाढे भवेतां कीर्त्तिदायिके ।
श्रवणायां भवेद्दुःखी धनिष्ठायां दरिद्रता ॥ ६ ॥
बुद्धिः शत्तभिषायां स्यात् पूर्वाभाद्रे सुखी भवेत् ।
सौख्यं चोत्तरभाद्रे च रेवत्यां कीर्त्तिवर्द्धनम् ॥ ७ ॥

तथायोगादिनिर्णयो विश्वसारे—

शुभः सिद्धिस्तथायुष्मान् ध्रुवयोगस्ततः परम् ।
प्रीतिःसौभाग्ययोगश्च वृद्धियोगस्ततः परम् ॥ १ ॥
हर्षणश्च तथायोगाः सर्वतन्त्रे शुभावहाः ।
ववबालवतैतिलवणिजस्तदनन्तरम् ॥
करणानि शुभान्येव सर्वतन्त्रेषु भामिनि ! ॥ २ ॥

## अथ लग्ननिर्णयः—

वृषे सिंहे च कन्यायां धनुर्मीनाख्यलग्नके ।
चन्द्रतारानुकूले च कुर्य्याद्दीक्षाप्रवर्त्तनम् ॥ १ ॥
स्थिरलग्नं विष्णुमन्त्रे शिवमन्त्रे चरं शुभम् ।
द्विस्वभावगतं लग्नं शक्तिमंत्रे प्रशस्यते ॥ २ ॥
विशेषतस्तु महादेवि ! दीक्षाग्रहणकर्म्मणि ।
शुक्लपक्षे भवेद्दिक्षाकृष्णेऽप्यापञ्चमीदिनात् ॥ ३ ॥
निषिद्धमासेऽपि तत्तद्विशेषो मुनिभेदतः ।
षष्ठी भाद्रपदे दर्शं तथा कृष्णाचतुर्द्दशी ॥
कार्तिके नवमी शुक्ला मार्गे शुक्ला तृतीयका ॥ ४ ॥
पौषे तु नवमी शुक्ला माघ शुक्ला चतुर्थिका ।
फाल्गुने नवमी शुक्ला चैत्रे कामचतुर्द्दशी ॥ ५ ॥
त्रयोदशीवावैशाख ज्येष्ठे दशहरातिथिः ।
आषाढे नवमी शुक्ला श्रावणे कृष्णपञ्चमी ॥ ६ ॥

एतानि देवपर्व्वाणि तीर्थकोटि फलं लभेत् ।
तत्र दीक्षा प्रकर्तव्या न मासं च परीक्षयेत् ॥ ७ ॥
न वारं न च नक्षत्रं न च तिथ्यादिदूषणम् ।
न योगकरणं चैव शंकरेण च भाषितम् ॥ ८ ॥

अन्यच्च मतम्—
चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता ।
ज्येष्ठे चतुर्द्दशी कृष्णा आषाढे नागपञ्चमी ॥ १ ॥
श्रावणैकादशी भाद्रे रोहिणी संयुताष्टमी ।
आश्विने च महापुण्या महाष्टम्यप्यभीष्टदा ॥ २ ॥
कार्तिके नवमी शुक्ला मार्ग्गशीर्षे तथासिता ।
षष्ठी चतुर्द्दशी पौषे माघेऽप्येकादशी शुभा ॥
फाल्गुने च सिता षष्ठी चेति कालविनिर्णयः ॥३॥

योगिनीतन्त्रे—
अयने विषुवेचैव ग्रहणे चन्द्रसूर्य्ययोः ।
रविसंक्रान्तिदिवसे युगाद्यायां सुरेश्वरि ! ॥ १ ॥
मन्वन्तरासु सर्वासु महापूजादिने तथा ।
चतुर्थी पञ्चमी चैव चतुर्द्दश्याष्टमी तथा ॥
तिथयः शुभदाः प्रोक्ताः ॥ २ ॥

इत्यादिवचनात्, चतुर्द्दश्याष्टमीति शक्तिविषयम् । चतुर्थीति गणेविषयम्, तत्तत्कल्पोक्तत्वात् ।

निन्दितेष्वपि कालेषु दीक्षोक्ता ग्रहणे शुभा ।
सूर्य्यग्रहणकालस्य समानो नास्ति भूतले ॥
विशेषतो महादेवि ! दीक्षा ग्रहणकर्म्मणि ॥ १ ॥

इति योगिनीहृदयाच्च ।
तत्र यद्यत्कृतं सर्वमनन्तं फलदं भवेत् ।
रविसंक्रमणे चव सूर्य्यस्य ग्रहणे तथा ॥ १ ॥
तत्र लग्नादिकं किंचिन्न विचार्य्यं कथंचन ।
रविसंक्रमणे चव नान्यदन्वेषितं भवेत् ।
न वारतिथिमासादि शोधनं सूर्य्यपर्व्वणि ॥ २ ॥

एवं चन्द्रग्रहणेऽपि तथा ।

रुद्रयामले—
न कुर्य्याच्छाक्तिकीं दीक्षामुपरागे विभावसोः ।
न कुर्य्याद्वैष्णवीं तां तु यदि चन्द्रसमोग्रहः ॥ १ ॥

एतच्च गोपालश्रीविद्येतरविषयम् ।

अन्येषु पुण्ययोगेषु ग्रहणे चन्द्रसूर्य्ययोः ॥

इतिगौतमीयात् । तथा—

अमावास्या सोमवारे भौमवारे चतुर्द्दशी ।
सप्तमी रविवारे च सूर्य्य ग्रहशतैः समाः ॥ १ ॥
शिष्यानाहूय गुरुणा कृपया दीयते यदि ।
तदा लग्नादिकं किंचिन्न विचार्य्यं कथंचन ॥ २ ॥

तथा—

सर्व्वे वाराः शुभाः सर्व्वे नक्षत्राणि च राशयः ।
यस्मिन्नहनि संतुष्टा गुरुः सर्वं शुभावहाः ॥ १ ॥

योगिनीतन्त्रे—

ग्रहणे च महातीर्थे नास्ति कालस्य निर्णयः ।
गङ्गायां भास्करक्षेत्रे विरजे चन्द्रपर्व्वते ॥ १ ॥
चटुले च मतङ्गे च तथा कन्याश्रमेषु च ।
निगृह्णीयात्ततो दीक्षां तीर्थेष्वेतेषु पार्व्वति ! ॥ २ ॥

वाराहीतन्त्रे—

शुक्रोऽस्तो यदि वा वृद्धो गुर्व्वादित्यो भवेद्यदि ।
मेषवृश्चिकसिंहेषु तदा दोषो न विद्यते ॥ १ ॥

महाविद्यासु सर्वासु कालादिविचारो नास्ति । तदुक्तं मुण्डमालातन्त्रे—

कालादिशोधनं नास्ति न चामित्रादिदूषणम् ॥ इति ।

इतिकालनिर्णयः ।

---

## अथ मालानिर्णयः—

तर्ज्जनीमध्यमानामाकनिष्ठा चेति ताः क्रमात् ।
तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैव पर्व्विका ॥
पर्व्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् ॥ १ ॥

तत्क्रममाह सनत्कुमारसंहितायाम्—

अनामामध्यमारभ्य कनिष्ठादित एव च ।
तर्ज्जनीमूलपर्य्यन्तं दशपर्व्वसु संजपेत् ॥ १ ॥

सनत्कुमारसंहितायाम्—

अनामामूलमारभ्य कनिष्ठादित एव च ।

तर्ज्जनीमध्यपर्य्यन्तमष्टपर्वसु संजपेत् ॥ १ ॥

एतद्वचनद्वयन्तु विष्णुविषयम्। शक्तिविषये नायं प्रकारः। हंसपारमेश्वरेऽपि—

पर्व्वद्वयमनामायाः परिवर्तेन वैक्रमात्।
पर्व्वत्रयं मध्यमायास्तर्ज्जन्येकं समाहरेत् ॥ १ ॥
अनामिकात्रयं पर्व्वकनिष्ठा च त्रिपर्विका।
मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्व्वणि ॥
तर्जन्यग्रे तथामध्ये योजयेत्स तु पापकृत् ॥ २ ॥

श्रीक्रमवचनादन्यच्च—

अनामामध्यमारभ्य कनिष्ठादित एव च।
तर्जनीमूलपर्य्यन्तं दशपर्व्वसु संजपेत् ॥ १ ॥
शक्तिमाला समाख्याता सर्वतन्त्रेषु गोपिता।
अनामिकाद्वयं पर्व्वकनिष्ठा च त्रिपर्विका ॥
मध्यमायाश्च त्रितयं तर्जनीमूलपर्व्वणि ॥ २ ॥
अनामामूलमारभ्य प्रादक्षिणक्रमेण च।
मध्यमामूलपर्य्यन्तं जपेदष्टसु पर्व्वसु ॥ ३ ॥

इदमपि तथैव मुण्डमालातन्त्रे—

अनामिकाद्वयं पर्वकनिष्ठादिक्रमेण तु।
तर्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता ॥ १ ॥
अङ्गुलीर्न वियुञ्जीत किञ्चिदाकुञ्चिते तले।
अङ्गुलीनां वियोगाच्च छिद्रे च श्रवते जपः ॥ २ ॥

अन्यत्रापि—

अङ्गुल्यग्रे च यज्जप्तं तज्जप्तं मेरुलंघने।
पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥ १ ॥
गणनाविधिमुल्लंघ्य यो जपेत्तु जपं यतः।
गृह्णन्ति राक्षसास्तेन गणयेत्सर्वदा बुधः ॥ २ ॥

विश्वसारे—

जपसंख्या तु कर्तव्या नासङ्ख्यातजपेत्सुधीः।
न संख्याकारकस्यास्य सर्वं भवति निष्फलम् ॥ १ ॥

तन्त्रे—

हृदये हस्तमारोप्य तिर्यक्कृत्वा कराङ्गुलीः।
आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत् ॥ १ ॥

सनत्कुमारीये—

क्रमोत्क्रमगतैर्माला मातृकार्णैः क्षमेरुकैः ।
सबिन्दुकैः साष्टवर्गैरन्तर्यजनकर्म्मणि ॥
आदिकुतुट्टतुधुपश इत्यष्टौ प्रकीर्तिताः ॥ १ ॥

तत्रायमर्थः—

अकारादिवर्णान् प्रत्येकं सबिन्दून् (१)कृत्वा पूर्वमुच्चार्य्य मन्त्रजपः कार्य्यः । अनेन प्रकारेणाष्टोत्तरशतसंख्यो जपो भवति । अन्तर्यजनेत्युपलक्षणम् ।

सबिन्दुवर्णमुच्चार्य्य पश्चान्मन्त्रं जपेद्बुधः ।
अकारादिक्षकारान्तं बिन्दुयुक्तं विभाव्य च ।
वर्णमाला समाख्याता अनुलोमविलोमिका ॥ १ ॥

इति नारदवचनात् । शतादिजपादावधिकाष्टजपेष्टवर्गाबिन्दुयुताः कार्याः । तथाच—'अराम' इत्यादि ।

क्षमेरुं कल्पयित्वा तु जपे तं नाभिलङ्घयेत् ॥

सिद्धेश्वरतन्त्रे—

अनुलोमविलोमेन वर्गाष्टकविभेदतः ।
मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितान्मनून् ॥
कुर्य्याद्वर्णमयीं मालां सर्वतन्त्रे प्रकाशिनीम् ॥ १ ॥

मालिनीविजयसूत्रनियमः—

अन्तर्विद्रुमभासमानभुजगीं सुप्तोत्थवर्णोज्वला-
मारोहप्रतिरोहतः शतमयीं वर्णाष्टकाष्टोत्तराम् ॥
अक्षब्रह्मविदेहमेरुशिखरां श्रीमातृकाख्यावलि
विद्यां नौमि विचित्रमन्त्रजननीं ज्ञानैकदीपाङ्कुराम् ॥ १ ॥

---

## अथ मालायां नियमः ।

पद्मबीजादिभिर्मालाबहिर्जापे शृणुष्व ताः ।
रुद्राक्षशङ्खपद्माक्षपुत्रजीवकमौक्तिकैः ॥ १ ॥
स्फाटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा ।
राजतैः कुशमूलैश्च गृहस्थस्याक्षमालिका ॥ २ ॥
अंगुलीगणनादेकं पर्व्वणाष्टगुणं भवेत् ।
पुत्रजीवैर्दशगुणं शतं शङ्खैः सहस्रकम् ॥ ३ ॥

---

(१) अकारादीनां वर्णानां कवर्गादीनां चान्तिमं वर्णं सानुस्वारं कृत्वा इत्यर्थः ।

प्रवालैर्मणिरत्नैश्च दशसाहस्रकं स्मृतम् ।
तदेव स्फटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते ॥ ४ ॥
पद्माख्यैर्दशलक्षं स्यात्सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्याकोटिशतं रुद्राक्षः स्यादनन्तकम् ।
सर्वैर्विरचिता माला नृणां मुक्तिफलप्रदा ॥ ५ ॥

कालिकापुराणे—

रुद्राक्षैर्वा यदि जपेदिन्द्राक्षैः स्फाटिकैस्तथा ।
नान्यन्मध्ये प्रयोक्तव्यं पुत्रजीवादिकं च यत् ॥ १ ॥
यद्यन्यन्तु प्रयुज्येत मालायां जपकर्म्मणि ।
तस्य कामं च मोक्षं च न ददाति श्रियंकरी ॥ २ ॥

कामनाभेदे तु—

रुद्राक्षैर्विहिता माला शत्रूणां नाशिनी मता ।
कुशग्रन्थिमयी माला सर्वपापप्रणाशिनी ॥ १ ॥
पुत्रजीवफलैः क्लृप्ता कुरुते पुत्रसम्पदम् ।
निर्म्मिता रौप्यमणिभिर्ज्जपमालेप्सितप्रदा ॥
प्रवालैर्विहिता माला प्रयच्छेद्विपुलं धनम् ॥ २ ॥

भैरवीविद्यायान्तु वाराहीतन्त्रे—

सुवर्णमणिभिर्मालां स्फाटिकीं शङ्खनिर्म्मिताम् ।
प्रवालैरेव वा कुर्य्यात्पुत्रजीवं विवर्ज्जयेत् ॥
पद्माक्षं चैव रुद्राक्षं भद्राक्षं च विशेषतः ॥ १ ॥

त्रिपुरामन्त्रजपादौ तु रक्तचन्दनबीजादिभिरतिप्रशस्ता माला बोद्धव्या । तथाच तन्त्रराजे—

रक्तचन्दनमाला तु भोगदा मोक्षदा भवेत् ॥

तथा—

वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे ।
त्रिपुराया जपे शस्ता रुद्राक्षै रक्तचन्दनैः ॥ १ ॥

मुण्डमालायाम्—

श्मशानभूतरोमाला ज्ञेया धूमावतीविधौ ।
नरांगुल्यास्थिभिर्मालाग्रथिता सर्वकामदा ॥
नाड्या संग्रथनं कार्य्यं रक्तेन वाससा प्रिये ! ॥ १ ॥
सदा शंखमयी माला नीलसा स्वते विधौ ।
नृललाटास्थिखण्डेन रचिता जपमालिका ॥ २ ॥

महाशंखमयी माला ताराविद्यां जपेत्प्रिये ! ।
कणतेत्रांतरालास्थिमहाशंखाः प्रकीर्तिताः ॥ ३ ॥

तथाच भैरवीतन्त्रे—

नरास्थिघटितामालामहाशंखाः प्रकीर्तिताः ।
अदग्धब्रह्ममालास्थिमहामालां स्मरेत्सदा ॥ १ ॥

मालानियमस्तु मुण्डमालायाम्—

अन्योन्यसमरूपाणि नातिस्थूलकृशानि वै ।
कीटादिभिरदुष्टानि न जीर्णानि नवानि वै ॥ १ ॥

तद्यथा गौतमीये—

पञ्चाशल्लिपिभिर्म्माला विहिता सर्वकर्म्मसु ।
अकारादिक्षकारान्ताचाक्षमाला प्रकीर्तिता ॥ १ ॥
क्षार्णं मेरुमुखं तत्र कल्पयेन्मुनिसत्तम ! ।
अनया सर्वमन्त्राणां जपः सर्वसमृद्धिदः ॥ २ ॥

चामुण्डातन्त्रे—

नित्यं जपं करे कुर्य्यात् न तु काम्यमबोधनात् ।
काम्यमपि करे कुर्य्यात् मालाभावे न सुन्दरि ! ॥ १ ॥

तेन मालाया एव प्राधान्यम् । कामनाभेदे तु गौतमीये—

समासेनाक्षसूत्रस्य विधानमिह कथ्यते ।
पञ्चविंशतिभिर्मोक्षं त्रिंशद्भिर्द्धनसिद्धये ॥ १ ॥
सर्वथा सप्तविंशत्या पञ्चदश्याभिचारिके ।
पञ्चाशद्भिः काम्यसिद्धिः स्यात्तथा चतुरुत्तरैः ॥
अष्टोत्तरशतैः सर्वा सिद्धिरुक्ता मनीषिभिः ॥ २ ॥

---

## अथासनभेदाः ।

हंसमाहेश्वरे—

कम्बलं कोमलं कौशं दारवं कर्म्मसाधनम् ।
एतेषामासनं ग्राह्यं चर्म्मासनं सुरेश्वरि ! ॥ १ ॥
लोम्नि चैव दयासीनस्तदा सर्वं विनश्यति ।
लोमस्पर्शनमात्रेण सिद्धिहानिः प्रजायते ॥ २ ॥
काम्यार्थं कम्बलं चैव श्रेष्ठं च रक्तकम्बलम् ।
कृष्णाजीने ज्ञानसिद्धिर्म्मोक्षश्रीर्व्याघ्रचर्म्मणि ॥
कुशासने मंत्रसिद्धिर्न्नात्र कार्या विचारणा ॥ ३ ॥

धरण्यां दुःखसंभूतिर्दौर्भाग्यं दारुजासने ।
वंशासने दरिद्रः स्यात्पाषाणे व्याधिपीडनम् ॥ ४ ॥
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ।
जपध्यानतपोहानिं वस्त्रासनं करोति हि ॥ ५ ॥

अतो वस्त्रासनं केवलमेव निषिद्धम्, 'वस्त्रासनं रोगहरम्'इत्यादिवचनेन विशिष्टस्य फलजनकत्वाभिधानात्; 'चैलाजिनकुशोत्तरम्'इति-भगवद्वचनाच्च । तथाच गौतमीये—

'मृद्वासने विशेन्मन्त्री पटाजिनकुशोत्तरम्' इति ।

योगिनीहृदये—

न दीक्षितो विशेज्जातु कृष्णाजिनासने गृही ।
विशेद्यतिर्वनस्थश्च ब्रह्मचारी च भिक्षुकः ॥ १ ॥

---

## अथ माला संस्कारः ।

सनत्कुमारीये—

कार्प्पाससंभवं सूत्रं धर्म्मकामार्थमोक्षदम् ।
तच्च विप्रेन्द्र ! कन्याभिर्निर्मितं च सुशोभनम् ॥ १ ॥
शुभ्रं रक्तं तथा कृष्णं पट्टसूत्रमथापि वा ।
शान्तिवश्याभिचारेषु मोक्षैश्वर्य्यजपेषु च ॥ २ ॥
शुभ्रं रक्तं तथा पीतं कृष्णं वर्णेषु च क्रमात् ।
सर्वेषामेव वर्णानां रक्तं सर्वेप्सितप्रदम् ॥ ३ ॥
त्रिगुणं त्रिगुणीकृत्य ग्रन्थयेच्छिल्पशास्त्रतः ।
एकैकं मातृकावर्णं सतारं प्रजपेत्सुधीः ॥ ४ ॥
मणिमादाय सूत्रेण ग्रन्थयेन्मध्यमध्यतः ।
ब्रह्मग्रन्थीविधायेत्थं मेरुं च ग्रन्थिसंयुतम् ॥
ग्रन्थयित्वा पुरो मालां ततः संस्कारमाचरेत् ॥ ५ ॥

तदुक्तं सपर्यातन्त्रे—

ब्रह्मग्रन्थिं ब्राह्मणानां नागपाशो द्विजन्मनाम् ॥

द्विजन्मनाम्—क्षत्रियादीनामित्यर्थः । कस्यचिन्मते मूलविद्यया ग्रथयेत् । तथाच एकवीराकल्पे—

मातृकामन्त्रतो ग्रन्थिं विद्यया वा प्रकारयेत् ।
सुवर्णादिगुणैर्वापि ग्रन्थयेत्साधकोत्तमः ॥ १ ॥
ब्रह्मग्रन्थिं ततो दद्यान्नागपाशं तथापि वा ।
कवचेनावबध्नीयान्मालां ध्यानपरायणः ॥ २ ॥

सर्वशेषं ततो मेरुं सूत्रद्वयसमन्वितम् ।
ग्रन्थयेत्तारयोगेन बध्नीयात्साधकोत्तमः ॥
एवं निष्पाद्य देवेशि ! प्रतिष्ठां च समाचरेत् ॥ ३ ॥

गौतमीये—

मुखे मुखं तु संयोज्य पुच्छे पुच्छं नियोजयेत् ।
गोपुच्छसदृशी माला यद्वा सर्पाकृतिः शुभा ॥
एवं निर्माय मालां व शोधयेन्मुनिसत्तमः ॥ १ ॥

मुखपुच्छनियमस्तु स्वच्छन्दमाहेश्वरे—

रुद्राक्षस्योन्नतं प्रोक्तं मुखं पृष्ठं च निर्म्मलम् ।
कमलाक्षस्य सूक्ष्मांशं सबिन्दुद्वितयं मुखम् ॥ १ ॥
सबिन्दुकस्य स्थूलांशं पृष्ठं श्लक्ष्णमिति स्मृतम् ।
एवं ज्ञात्वा मुखं पृष्ठं रुद्राद्यांभोरुहाक्षयोः ॥ २ ॥
तत्सजातीयमेकाक्षं मेरुत्वेनाग्रतो न्यसेत ।
एकैकमणिमादाय ब्रह्मग्रन्थि प्रकल्पयेत् ॥
एकैकमातृकावर्णान् ग्रन्थनादौ तु संजपेत ॥ ३ ॥

ग्रन्थिनियमोऽपि तत्रैव—

त्रिवृत्तिग्रन्थिनैकेन तथार्द्धेन विधीयते ।
सार्द्धद्वयावर्त्तनेन ग्रन्थीं कुर्य्याद्यथा दृढम् ॥ १ ॥

इत्येताभ्यामिच्छाविकल्पः ॥

अश्वत्थपत्रनवकैः पद्माकारं तु कल्पयेत ।
तन्मध्ये स्थापयेन्मालां मातृकां मूलमुच्चरन् ॥
क्षालयेत्पञ्चगव्येन सद्योजातेन तज्जलैः ॥ १ ॥

सद्योजातमन्त्रस्तु—

ॐसद्योजातं प्रपद्यामि सद्यो जाताय वै नमः ।
भवेभवेनातिभवे भजस्व मां भवोद्भवाय नमः ॥ १ ॥
चन्दनागुरुपुष्पाद्यैर्वामदेवेन घर्षयेत् ॥

वामदेवमन्त्रस्तु—

ॐवामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मथनाय नमः । 'धूपयेत्तामघोरेण' ।

अघोरमन्त्रस्तु—

ॐअघोरेभ्योऽथ घोरेभ्यो घोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः ॥

लिम्पयेत्तत्पुरुषेण तु । तत्पुरुषमन्त्रस्तु—

ॐतत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।

मंत्रयेत्पंचमेनैव प्रत्येकं तु शतं शतम् ।
मेरुञ्च मंत्रयेत्तेन मनुना च शतं शतम् ॥ १ ॥

पञ्चममंत्रस्तु—

ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोम् ।

प्रत्येकन्तु सकृत सकृत् वा ॥ तथा च तत्रैव—

प्रत्येकं मंत्रयेन्मंत्रा पंचमेन सकृत् सकृत् ॥ इति ।

तथाच गौतमीये समुदायमालामधिकृत्य—

पंचमेनैव सूक्तेन शतान्यूमेन मंत्रयेत् ।
इति दर्शनामालायां वा शतजपः ।
तत्र वाह्ययजेद्देवं यथा विभवविस्तरैः ॥

मालायाः प्राणप्रतिष्ठानंतरं देवतां पुजयेत् । तथाच सनत्कुमारसंहितायाम्—

संस्कृत्यैवं ततो मालां तत्प्राणांस्तत्र स्थापयेत् ।
मूलमंत्रेण तां मालां पूजयेत् द्विजसत्तमः ॥ १ ॥

वाराहीतंत्रे—

ॐमाले महामाले सर्वतत्वस्वरूपिणि ! ।
चतुर्व्वर्ग्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ १ ॥

इति विष्णुविषयम् । शाक्तविषये तु—

वाग्भवं तु तथा लक्ष्मीमन्तादिमालिकां ततः ।
ङन्तां हृदयवर्णान्तां मंत्रेणानेन पूजयेत् ॥ १ ॥

गौतमीये—

मंत्रयेन्मूलमन्त्रेण क्रमेणोत्क्रमयोगतः ।
तथैव मातृकावर्णैर्म्मन्त्रयेत्तांतु मन्त्रवित् ॥ १ ॥

योगिनीहृदये—

होमकर्म्म ततः कुर्य्याद्देवताभावसिद्धये ।
अष्टोत्तरशतं हुत्वा संपाताज्यं विनिःक्षिपेत् ।
होमकर्म्मण्यशक्तश्चेद्द्विगुणं जपमाचरेत् ॥ १ ॥
नान्यमन्त्रं जपेन्मंत्री कम्पयेन्न विधूनयेत् ।
कम्पनात् सिद्धिहानिः स्याद्धूलनं बहुदुःखदम् ॥ २ ॥

शब्दे जाते भवेद्रोगः करभ्रष्टा विनाशकृत् ।
छिन्ने सूत्रे भवेन्मृत्युस्तस्माद्यत्नपरो भवेत् ॥ ३ ॥
ॐत्वं माले सर्वदेवानां सर्वसिद्धिप्रदा मता ।
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ॥ ४ ॥
मायाबीजादिकं कृत्वा रक्तपुष्पैः समर्चयेत् ।
इत्युक्त्वोपरि मृज्याथ गोपयेद्यत्नतो सुधीः ॥ ५ ॥

मालासंस्कारस्य नित्यतामाह रुद्रयामले—

अप्रतिष्ठितमालाभिर्म्मन्त्रं जपति यो नरः ।
सर्वं तद्विफलं विद्यात्क्रुद्धा भवति देवता ॥ १ ॥

कामनाभेदे तु अङ्गुलिनियमः, तथाच गौतमीये—

तर्ज्जन्यङ्गुष्ठयोगेन शत्रूच्चाटनकारकम् ।
अङ्गुष्ठमध्यमायोगान्मन्त्रसिद्धिस्सुनिश्चिता ॥ १ ॥
अङ्गुष्ठानामिकायोगादुच्चाटोच्छेदने मते ।
ज्येष्ठाकनिष्ठायोगेन शत्रूणां नाशनं मतम् ॥ २ ॥

वैशंपायनसंहितायाम्—

अङ्गुष्ठस्थामक्षमालां चालयेन्मध्यमध्यतः ।
तर्ज्जन्या न स्पृशेदेवं मुक्तिदो गणनक्रमः ॥ १ ॥
जीर्णे सूत्रे पुनः सूत्रं ग्रन्थयित्वा शतं जपेत् ।
प्रमादात्पतिता हस्ताच्छतमष्टोत्तरं जपेत् ।
जपेत् निषिद्धसंस्पर्शात्क्षालयित्वा यथोचितम् ॥ २ ॥

छिन्नेऽप्यष्टोत्तरशतजपः, करभ्रष्टछिन्नयोस्तुल्यफलत्वात् । प्रकारान्तरमागमकल्पद्रुमे—

भूतशुद्ध्यादिकां पूजां समाप्यं तत्र पूजयेत् ।
गणेशसूर्यविष्णवीशान् दुर्गाश्चावाह्य मन्त्रवित् ॥ १ ॥
पञ्चगव्ये ततः क्षिप्त्वा हैमामन्त्रेण मन्त्रवित् ।
तस्मात्ततोऽल्पतां मालां स्वर्णपात्रे निधाय च ॥ २ ॥
पयो दधि घृतं क्षौद्रं शर्कराद्यैरनुक्रमात् ।
तोयधूपान्तरैः कृत्वा पञ्चामृतविधिं बुधः ॥ ३ ॥
क्रमात्तत्रैव संस्थाप्य स्थापयेच्छीतले जले ।
ततश्चन्दनसौगन्धिकस्तूरीकुङ्कमादिभिः ॥ ४ ॥
तामालिप्यहृदयोर्म्मन्त्रमष्टोत्तरशतं जपेत् ।
तस्यां नवग्रहांश्चैव दिक्पालांश्च प्रपूजयेत् ॥
ततः सम्पूज्य च गुरुं गृह्णीयान्मालिकां शुभाम् ॥५॥ इति ।

इति मालासंस्कारः ।

## अत्र रहस्यमालासंस्कारः ।

तत्र प्रथमं गुटिकां लाक्षया निर्माय पट्टसूत्रेण मालां ग्रन्थयित्वा पञ्चगव्यैर्मालां प्रक्षाल्य नवाश्वत्थपत्रोपरि स्थापयेत् । ततः–आँ ह्रीं क्रों हं सः अमुकदेव्या प्राणा इह प्राणाः । आँ ह्रीं क्रों हं सः अमुकदेव्या जीव इह स्थितः। आँ ह्रीं क्रों हं सः अमुकदेव्याः सर्वेन्द्रियाणि वाङ्मनश्चक्षुश्श्रोत्रघ्राणप्राणाः इहागत्य सुखं चिरं तिष्ठन्तु नमः । इत्यन्तेन मालोपरि हस्तं दत्त्वा प्राणप्रतिष्ठां कुर्यात् । ततः अमुकदेवि इहागच्छेहतिष्ठेहतिष्ठेह सन्निहिता भव । इह सन्निरुद्धा भव वरदा भव अत्राधिष्ठानं कुरु । मम पूजां गृहाण इत्यनेन मालोपरि देवीमावाह्य मूलमन्त्रमुच्चार्य अमुकदेव्यै एतत्पाद्यं नम इत्यादिना पाद्यादिषोडशोपचारैर्गन्धादिपञ्चोपचारैर्वा मालोपरि देवीं सम्पूज्य अष्टोत्तरशतवारं मूलं मन्त्रं जपेत् । ततो वन्हिं प्रज्वाल्य मूलमन्त्रमुच्चार्य अमुकदेव्यै नमः इत्यनेनाष्टोत्तरशतवारं होमं कुर्यात्, ततो मालायाः गोपनं कुर्यात् । पूजाकाले रात्रौ च तया मालया जपः कार्यः ।

रहस्यमालाभिन्नमालायान्तु अन्यादृशःसंस्कारः ॥

इति रहस्यमालासंस्कारविधिः ।

---

## अथ हरचक्रम् ।

अथातः सम्प्रवक्ष्यामि हरचक्रं शुभोदयम् ।
यज्ज्ञात्वा ज्ञानवान् लोके जायते मन्त्रवित्तमः ॥ १ ॥
तस्मात्सर्वप्रयत्नेन यः सुधीः स विचारयेत् ।
अन्यथा वर्जयेन्मन्त्रं इत्याह भगवान् शिवः ॥ २ ॥
कुर्यात्क्षेत्रं च देवानां तारकोष्ठसमन्वितम् ।
तत्पुनर्विभजेन्मन्त्री विधाय कर्णसूत्रकम् ॥ ३ ॥
पातयेद्दिक्षु दुर्गाञ्च वाणीं तारां च भैरवम् ।
अथेशादिषु कोणेषु वक्ष्यमाणास्तु देवताः ॥ ४ ॥
कर्णसूत्रस्योभयत ईशादिदिक्षु योजयेत् ।
त्रिपुरां भुवनेशीं च पीठेशीं त्र्यम्बकं तथा ॥ ५ ॥
वासुदेवं श्रियं चैव छिन्नमस्तां च चण्डिकाम् ।
ईशानाद्यं विवस्वन्तं क्रमाच्च त्वरितां तथा ॥ ६ ॥
इन्द्राक्षीं चैव हेरम्बं पितामहमनन्तरम् ।
महामायाञ्च कालीं च यदन्यत्सौम्यदवतम् ॥ ७ ॥
पञ्चाशद्विलिखेद्वर्णान् ईशकोष्ठादिकं क्रमात् ।
पितृमातृकृतं नाम वेदमन्त्रं परिष्कृतम् ॥ ८ ॥

सर्वकर्मणि तद्योगं शस्तं तन्मन्त्रवीक्षणम् ।
नामार्णश्च समारभ्य यावद्देवार्णगोचरम् ॥ ९ ॥
स शुद्धौ ग्रहणं कुर्यादशुद्धौ न कदाचन ।
धनं पुत्रं च लाभं च निधनं चैव बन्धनम् ॥ १० ॥
मुक्तिसौख्यं च धर्मं च अरिमित्रं च कामदम् ।
भीषणं चिन्तयेत्कोष्ठे कोष्ठचक्रमितीरितम् ॥ ११ ॥

इति कोष्ठानां नामरूपफलम् ।

इति हरचक्रम् ।

---

## अथ षट्दलचक्रम् ।

षट्दलं चक्रमालिख्य प्रागादिषु दलेष्विमान् ।
अकारादिक्षकारान्तान् लिखेन्निःषण्ढकूलकान् ॥ १ ॥
स्वनामाद्यक्षरं यच्च तदारभ्य विचारयेत् ।
प्रथमे सम्पद्दृष्टिा द्वितीये सम्पदः क्षयः ॥ २ ॥
तृतीये च धृतिं विन्द्याच्चतुर्थे बन्धुविग्रहः ।
पञ्चमे संशयात्मा स्यात्षष्ठे सर्वविनाशकृत् ॥ ३ ॥

तथा च मालिनीविजये षट्दलं चक्रमालिखेदित्यादि सर्वमुक्त्वा—

स्थानस्था वैभवा मन्त्रा ध्यानस्थाश्च फलप्रदाः ।
स्थानध्यानपरिभ्रष्टाः सुसिद्धा अपि वैरिणः ॥
अत्र चेच्छोधितं मन्त्रं नान्यच्चक्रं विचारयेत् ॥ १ ॥

ध्यानं तृतीयभवनं श्रवणं मननादौ ध्यानस्य तृतीयत्वात् ॥ निःषण्ढ-कूटकान्—ऋॠऌॡक्षकारवर्जितान् ॥

स्वराणां मध्यगं यत्तु तच्चतुष्कं नपुंसकम् ।

इति निबन्धवचनात् कूटः क्षकारः ॥

इति षट्दलचक्रम् ।

---

## अथ पुरश्चरणम् ।

योगिनीहृदये—

गुरोराज्ञां समादाय शुद्धान्तःकरणो नरः ।
ततः पुरस्क्रियां कुर्य्यात् मन्त्रसिद्धिप्रकाम्यया ॥ १ ॥
जीवहीनो यथा देही सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्तितः ॥ २ ॥
तस्मादादौ स्वयं कुर्य्याद्गुरुं वा कारयेद्बुधः ।

गुरोरभावे विप्रं वा सर्वप्राणिहिते रतम् ॥ ३ ॥
स्निग्धं शास्त्रविदं मित्रं नानागुणसमन्वितम् ।
स्त्रियं वा सद्गुणोपेतां सपुत्रां विनियोजयेत् ॥ ४ ॥
आदौ पुरस्क्रियां कर्तुं स्थाननिर्णय उच्यते ।
पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम् ॥ ५ ॥
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ।
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ॥ ६ ॥
तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम् ।
अश्वत्थामलकीमूलं गोशालाजलमध्यतः ॥ ७ ॥
देवतायतनं कूलं समुद्रस्य निजं गृहम् ।
गृहे शतगुणं विद्याद्गोष्ठे लक्षगुणं भवेत् ॥ ८ ॥
कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ।
म्लेच्छदुष्टमृगव्यालशंकान्तकविवर्ज्जिते ॥ ९ ॥
एकान्तपावने निन्दारहिते भक्तिसंयुते ।
स्वदेशे धार्म्मिके देशे सुभिक्षे निरुपद्रवे ॥ १० ॥
रम्ये भक्तजनस्थाने निवसेत्तापसप्रिये ।
गुरूणां सन्निधाने च चित्तैकाग्रस्थले तथा ॥ ११ ॥
एषामन्यतमं स्थानमाश्रित्य जपमाचरेत् ।
यत्र ग्रामे जपेन्मन्त्री तत्र कूर्म्मं विचिन्तयेत् ॥ १२ ॥

गौतमीये—

पर्व्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे ।
यदि कुर्य्यात्पुरश्चर्य्यां तत्र कूर्म्मं न चिन्तयेत् ॥
ग्रामे वा यदि वा राष्ट्रे गृहे तं च विचिन्तयेत् ॥ १ ॥

## अथ पुरश्चरणे भक्ष्यादिनियमः ।

गौतमीये—

पुरश्चरणकृन्मन्त्री भक्ष्याभक्ष्यं विचारयेत् ।
अन्यथा भोजनाद्दोषात् सिद्धिहानिः प्रजायते ॥ १ ॥
शस्तान्नं च समश्नीयान्मन्त्रसिद्धिसमीहया ।
तस्मान्नित्यं प्रयत्नेन शस्तान्नाशी भवेन्नरः ॥ २ ॥

अथागस्त्यसंहितायाम्—

दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्ज्जितम् ।
तिलाश्चैव सितामुद्गाः कन्दकेमुकवर्ज्जिताः ॥ १ ॥
नारिकेलफलं चैव कदली लवली तथा ।

आम्रमामलकं चैव पनसं च हरीतकी ॥२ ॥
व्रतान्तरे प्रशस्तञ्च हविष्यं मन्यते बुधैः ।
भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा ॥
पयो मूलं फलं वापि यत्र यत्रोपलभ्यते ॥ ३ ॥

यत्तु योगिनीतन्त्रे—

चिञ्चां च नालिकाशाकं कलायलकुचं तथा ।
कदम्बं नारिकेलं च व्रते कूष्माण्डकं त्यजेत् ॥ १ ॥

इति यत्, तत्तु व्रतान्तरे बोद्धव्यम् ।

अथ वर्ज्यानि—

विवर्ज्जयेन्मधु क्षारं लवणं तैलमेव च ।
ताम्बूलं कांस्यपात्रं च दिवाभोजनमेव च ॥ १ ॥
क्षारं च लवणं मांसं गृञ्जनं कांस्यभोजनम् ।
माषाढकीं मसूरांश्च कोद्रवांश्चणकानपि ॥ २ ॥
कौटिल्यं क्षौरमभ्यङ्गमनिवेदितभोजनम् ।
असङ्कल्पितकृत्यं च वर्ज्जयेन्मर्दनादिकम् ॥ ३ ॥
स्नायाच्च पञ्चगव्येन केवलामलकेन वा ।
मन्त्रं जप्त्वान्नपानीयैः स्नानाचमनभोजनम् ॥
कुर्य्याद्यथोक्तविधिना त्रिसन्ध्यं देवतार्च्चनम् ॥ ४ ॥
अपवित्रकरो नग्नः शिरसा प्रावृतोऽपि वा ।
प्रलपन्नजपेद्यावत्तावन्निष्फलमुच्यते ॥ ५ ॥

कुलार्णवेऽपि—

यस्यान्नपानपुष्टाङ्गः कुरुते धर्म्मसञ्चयम् ।
अन्नदातुः फलस्यार्द्धं कर्तुश्चार्द्धं न संशयः ॥ १ ॥
तस्मात्सर्वप्रयत्नेन परान्नं वर्जयेत्सुधीः ।
पुरश्चरणकालेषु सर्वकर्मसु शांभवि ! ॥ २ ॥
जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।
मनो दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने ! ॥ ३ ॥

परान्नं भिक्षेतरविषयम्, भिक्षायां तस्य स्वस्वोत्पादनात् ।

योगिनीहृदये—

विहाय वह्निं नहि वस्तु किञ्चिद्ग्राह्यं परेभ्यः सति संभवे च ।
असम्भवे तीर्थबहिर्व्विशुद्धयात् पर्व्वातिरिक्ते प्रतिगृह्य जप्यात् ॥ १ ॥
तत्रासमर्थोऽनुदिनं विशुद्धाद्याचेत यावद्धितमात्रभक्षम् ।
गृह्णाति रागादधिकं न सिद्धिः प्रजायते कल्पशतैरमुष्य ॥ २ ॥

तथा—

वैदिकाचारयुक्तानां शुचीनां श्रीमतां मताम् ।
सत्कुलस्थानजातानां भिक्षाशी चाग्रजन्मनाम् ॥ १ ॥
सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ।
प्रोक्ते पारशरे शब्दे प्राणायामं सकृच्चरेत् ॥ २ ॥
बहुप्रलापी चाचम्य न्यस्याङ्गानि ततो जपेत् ।
क्षुतेऽप्येवं तथास्पृश्यस्थानानां स्पर्शनेऽपि च ॥
एवमादींश्च नियमान् पुरश्चरणकृच्चरेत् ॥ ३ ॥
विण्मूत्रोत्सर्गशङ्कादियुक्तः कर्म्म करोति यः ।
जपार्च्चनादिकं सर्वमपवित्रं भवेत् प्रिये ! ॥ ४ ॥
मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः ।
यो जपेत्स दहत्याशु देवतां गुप्तिसंस्थिताम् ॥ ५ ॥
आलस्यं जृम्भणं निद्रां क्षुतं निष्ठिवनं भयम् ।
नीचाङ्गस्पर्शनं कोपं जपकाले विवर्जयेत् ॥ ६ ॥
एवमुक्तविधानेन विलम्बं त्वरितं विना ।
उक्तसंख्यं जपं कुर्यात्पुरश्चरणसिद्धये ॥ ७ ॥
देवतागुरुमन्त्राणामैक्यं सम्भावयन्धिया ।
जपेदेकमनाः प्रातःकालं मध्यन्दिनावधि ॥ ८ ॥
यत्संख्यया समारब्धं तत्कर्तव्यमहर्निशम् ।
यदि न्यूनाधिकं कुर्य्याद्व्रतभ्रष्टो भवेन्नरः ॥ ९ ॥

मुण्डमालायाम्—

यत्संख्यया समारब्धं तज्जप्तव्यं दिने दिने ।
न्यूनाधिकं न कर्तव्यमासमाप्ति सदा जपेत् ॥
प्रजपेदुक्तसंख्यायाश्चतुर्गुणजपः कलौ ॥ १ ॥

अन्यत्रापि—

कृते जपस्तु कल्पोक्तस्त्रेतायां द्विगुणो जपः ।
द्वापरे त्रिगुणः प्रोक्तश्चतुर्गुणजपः कलौ ॥ १ ॥

कुलार्णवेऽपि—

न्यूनातिरिक्तकर्म्माणि न फलन्ति कदाचन ।
यथाविधिकृतान्येव तत्कर्म्माणि फलन्ति हि ॥ १ ॥
भूशय्या ब्रह्मचारित्वं मौनमाचार्य्यसेवनम् ।
नित्यं त्रिःसेवनं स्नानं क्षुद्रं कर्म्मविवर्जितम् ॥ २ ॥
नित्यपूजा नित्यदानं देवतास्तुतिकीर्तनम् ।

नैमित्तिकार्च्चनं चैव विश्वासो गुरुदेवयोः ।
जपनिष्ठाद्वादशैते धर्म्माः स्युर्म्मन्त्रसिद्धिदाः ॥ ३ ॥
स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् ।
असत्यभाषणं जिह्मभाषणं परिवर्ज्जयेत् ॥ ४ ॥
सत्येनापि न भाषेत जपहोमार्च्चनादिषु ।
अन्यथानुष्ठितं सर्वं भवत्येव निरर्थकम् ॥ ५ ॥
पुरश्चरणकाले तु यदि स्यान्मृतसूतकम् ।
तथापि कृतसङ्कल्पो व्रतं नैव परित्यजेत् ॥ ६ ॥

योगिनीहृदये—

शयीत कुशशय्यायां शुचिवस्त्रधरः सदा ।
प्रत्यहं क्षालयेच्छय्यामेकाकी निर्भयः स्वपेत् ॥ १ ॥
असत्यं भाषणं वाचं कुटिलां परिवर्जयेत् ।
असत्यं नाभिभाषेत जपहोमादिकर्मसु ।
वर्जयेद्गीतवाद्यादि श्रवणं नृत्यदर्शनम् ॥ २ ॥
अभ्यङ्गं गन्धलेपं च पुष्पधारणमेव च ।
त्यजेदुष्णोदकस्नानमन्यदेवप्रपूजनम् ॥ ३ ॥

तत्रैव—

नैकवासा जपेन्मन्त्रं बहुवासा कुलेऽपि वा ।

वैशम्पायनसंहितायाम्—

विपर्य्यासं न कुर्य्याच्च कदाचिदपि मोहतः ।
उपर्य्यधोबहिर्वस्त्रे पुरश्चरणकृन्नरः ॥ १ ॥
पतितानामन्त्यजानां दर्शने भाषणे श्रुते ।
क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ॥ २ ॥
तथा तस्था च तत्प्राप्तौ प्राणायामं षडङ्गकम् ।
कृत्वाचम्य जपेच्छेषं यद्वा सूर्य्यादिदर्शनम् ॥ ३ ॥

आदिशब्दाद्वह्निं ब्राह्मणं च ॥

तन्त्रान्तरे—

मनः संहरणं शौचं मानं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ॥ १ ॥
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गणावृतः ।
अपवित्रकरोऽशुद्धः प्रलपन्नजपेत्क्वचित् ॥ २ ॥
अनाशनः शयानो वा गच्छन् भुञ्जान एव वा ।
अप्रावृत्तौ करौ कृत्वा शिरसा प्रावृतोऽथवा ॥ ३ ॥

चिन्ताऽयाकुलचित्तो वा क्रुद्धः क्लान्तः क्षुधान्वितः ।
रथ्यायामशिवस्थाने न जपेत्तिमिरालये ॥ ४ ॥
उपानद्गूढपादो वा यानशय्यागतस्तथा ।
प्रसार्य न जपेत्पादौ उत्कटासन एव च ॥ ५ ॥
मार्ज्जारं कुक्कुटं क्रौञ्चं श्वानं शूद्रं कपिं खरम् ।
दृष्ट्वाचम्य जपेच्छेषं स्पृष्ट्वा स्नानं विधीयते ॥ ६ ॥

सर्व्वत्र जपेऽयं नियमः, मानसे तु नियमो नास्ति । तथाच—

अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि ।
मन्त्रैकशरणो विद्वान् मनसैवं सदाभ्यसेत् ॥१॥
न दोषो मानसे जापे सर्वदेशेऽपि सर्वदा ।
जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत् ॥ २ ॥

श्यामादिमन्त्रजाप्ये तु तत्तन्मन्त्रे विशेषो वक्तव्यः । जपफलमाह तन्त्रान्तरे—

सर्वेषामेव यज्ञानां जायतेऽसौ महाफलः ।
जपेन देवता नित्यं स्तूयमाना प्रसीदति ॥ १ ॥
प्रसन्ना विपुलान् भोगान् दद्यान्मुक्तिं च शाश्वतीम् ।
यक्षरक्षःपिशाचांश्च ग्रहाः सर्प्पाश्च भीषणाः ॥
जापिनं नोपसर्पन्ति भयभीताः समन्ततः ॥ २ ॥

पद्मनारदीययोः—

यावन्तः कर्मयज्ञाः स्युः प्रदिष्टानि तपांसि च ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ १ ॥
माहात्म्यं वाचिकस्यैतज्जपयज्ञस्य कीर्तनम् ।
अस्माच्छतगुणोपांशुः सहस्रो मानसः स्मृतः ॥ २ ॥
मानसः सिद्धिकामानां पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैव प्रशस्तो जप ईरीतः ॥ ३ ॥

गौतमीये—

शक्त्या त्रिः सेवनं स्नानमन्यथा द्वे सकृच्च वा ।
त्रिसन्ध्यं प्रजपेन्मन्त्रं पूजनं तत्समम्भवेत् ॥ १ ॥

सन्ध्यात्रये पूजाङ्गत्वाज्जपमष्टोत्तरशतमित्यर्थः ।

एवमादौ भवेत्पूजा न जपेत्पूजनं विना ।
जपान्ते वा भवेत्पूजा पूजान्ते वा जपेन्मनुम् ॥
प्रातःकालसमारभ्य जपेन्मध्यंदिनावधि ॥ १ ॥

'मध्यंदिनावधि'इतितु ननियमपरम् । किन्त्वधिककालव्यवच्छेदपरम् ।

अन्यथा तत्समये जपनियमे कदाचिज्जिह्वाया जाड्याजाड्येन वा प्रति-नियतदिवसीयजपसंख्याया अपूर्णत्वेऽधिकत्वे वा नियमभङ्गः स्यात् ।

वसन्ते तु विशेषः—

सूर्योदयं समारभ्य घटिकादशकावधि ।
वसन्त एवमेव स्यादितरत्र दिवानिशि ॥ १ ॥

इति वचनात्

मनः संहृत्य विषयान्मन्त्रार्थगतमानसः ।
न द्रुतं न विलम्बं च जपेन्मौक्तिकहारवत् ॥ १ ॥

विशुद्धेश्वरतन्त्रे—

जपस्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ।
धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ॥ १ ॥
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ।
जिह्वोष्ठौ चालयेत्किञ्चिद्देवतागतमानसः ॥ २ ॥
किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ।
मन्त्रमुच्चारयेद्वाचा वाचिकः स जपस्मृतः ॥ ३ ॥

तत्रैव—

निजकर्णागोचरो यो मानसः स जपः स्मृतः ।
उपांशुर्निजकर्णस्य गोचरः परिकीर्त्तितः ॥ १ ॥
निगदस्तु जनैर्वंद्यस्त्रिविधो जप ईरीतः ।
मन्त्रमुच्चारयेद्वाचा वाचिकःस जपःस्मृतः ॥ २ ॥
उच्चैर्ज्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ।
जिह्वाजपः शतगुणः सहस्रो मानसः स्मृतः ॥ ३ ॥

तन्त्रान्तरे—

उच्चैर्ज्जपोऽधमः प्रोक्त उपांशुर्मध्यमः स्मृतः ।
उत्तमो मानसो देवि ! त्रिविधः कथितो जपः ॥ १ ॥

जिह्वाजपस्तु—

जिह्वाजपः सविज्ञेयः केवलं जिह्वया बुधैः ॥ इति ॥
अतिह्रस्वो व्याधिहेतुरतिदीर्घो वसुक्षयः ।
अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ॥ १ ॥
मनसा यः स्मरेत्स्तोत्रं वचसा वा मनुं जपेत् ।
उभयं निष्फलं याति भिन्नभाण्डोदकं यथा ॥ २ ॥

गौतमीये—

पशुभावे स्थिता मन्त्राः केवलं वर्णरूपिणः ।

सौषुम्ने ध्वन्युच्चरिताः प्रभुत्वं प्राप्नुवन्ति ते ॥ १ ॥

पाद्मनारदियोः—

मन्त्राक्षराणि चिच्छक्तौ ग्रथितानि विभावयेत् ।
तामेव परमे व्योम्नि परमानन्दबृंहिते ॥
दर्शयत्यात्मसद्भावं पूजाहोमादिभिर्विना ॥ १ ॥ इति ॥

गौतमीये—

मूलमन्त्रं जपेद्बुद्ध्या सुषुम्णामूलमध्यगम् ।
मन्त्रार्थस्तस्य चैतन्यं ज्ञावं ध्यात्वा पुनः पुनः ॥ १ ॥

कुलार्णवेऽपि-

मनो ऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः ।
न सिद्ध्यति वरारोहे ! कल्पकोटिशतैरपि ॥ १ ॥
जातसूतकमादौ स्यादन्ते च मृतसूतकम् ।
सूतकद्वयसंयुक्तो यो मन्त्रः स न सिद्ध्यति ॥ २ ॥
गुरोस्तत्र हितं कृत्वा मन्त्रं यावज्जपेद्धिया ।
सूतकद्वयनिर्मुक्तः स मन्त्रः सर्वसिद्धिदः ॥ ३ ॥

कामसंहितायाम्—

प्रणवं चामृतं प्रोक्तं तदन्तकृतमन्त्रकम् ।
जप्त्वा चिरेण सिद्धिः स्याद्दुष्टमन्त्रेऽपि नान्यथा ॥ १ ॥
जातसूतकमादौ स्यान्मृतसूतकमन्ततः ।
सूतकद्वयनिर्मुक्तःस च सिध्यति नान्यथा ॥ २ ॥
ब्रह्मबीजं मनोर्दत्वा चाद्यन्ते च महेश्वरि ! ।
सप्तवारं जपेन्मन्त्रं सूतकद्वयमुक्तये ॥ ३ ॥

तत्रैव—

तस्माद्देवि ! प्रयत्नेन ध्रुवेण पुटितं ध्रुवम् ।
अष्टोत्तरशतं वापि सप्तवारं जपेदितः ॥
जपान्ते च तथा जप्त्वा चतुर्वर्गफलाप्तये ॥ १ ॥

तत्रैव—

मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ॥ १ ॥
लुप्तबीजाश्च ये मन्त्रा न दास्यन्ति फलं प्रिये ! ।
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥ २ ॥
चैतन्यरहिता मन्त्राः प्रोक्ता वर्णास्तु केवलम् ।
फलं नैव प्रयच्छन्ति लक्षकोटिशतैरपि ॥ ३ ॥

मन्त्रोच्चारे कृते यादृक् स्वरूपं प्रथमं भवेत् ।
शते सहस्रे लक्षे वा कोटिजापे न तत्फलम् ॥ ४ ॥
हृदये ग्रन्थिभेदश्च सर्वावयववर्धनम् ।
आनन्दाश्रूणि पुलको देहावेशः कुलेश्वरि ! ॥ ५ ॥
गद्गदोक्तिश्च सहसा जायते नात्र संशयः ।
सकृदुच्चरितेऽप्येव मन्त्रे चैतन्यसम्पुटे ॥ ६ ॥
दृश्यन्ते प्रत्यया यत्र पारम्पर्यं तदुच्यते ।
मासमात्रं जपेन्मन्त्रं भूतलिप्या तु सम्पुटम् ।
क्रमोत्क्रमात्सहस्रन्तु तस्य सिद्धो भवेन्मनुः ॥ ७ ॥

अथ भूतलिपिः—

पञ्च ह्रस्वाः सन्धिवर्णव्योमेराग्निजलन्धराः ।
अन्त्यमाद्यं द्वितीयं च चतुर्थं मध्यमं क्रमात् ॥ १ ॥
पंचवर्गाक्षराणि स्युर्वातः श्वेतेन्दुभिः सह ।
एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः ॥ २ ॥

मन्त्रस्तु—

अइउऋऌएऐओऔहयरवलङ कखघगञ ।
चछझतजणटठढडन तथधदम पफभवश षस ॥ १ ॥

गौतमीये—

एवं जपं पुरा कृत्वा तेजोरूपं समर्पयेत् ।
देवस्य दक्षिणे हस्ते कुशपुष्पार्घवारिभिः ॥ १ ॥
सफलं तद्विभाव्यैव प्राणायामं समाचरेत् ।
जपस्यादौ जपान्ते च त्रितयं त्रितयं चरेत् ॥ २ ॥

शक्तिविषये वामहस्ते तथाच—

एवं जपं पुराकृत्वा गन्धाक्षतकुशोदकैः ।
जपं समर्पयेद्देव्या वामहस्ते विचक्षणः ॥ १ ॥
जपान्ते प्रत्यहं मन्त्री होमयेत्तद्दशांशतः ।
तर्पणं चाभिषेकं च तद्दशांशं ततो मुने ! ॥ २ ॥
प्रत्यहं भोजयेद्विप्रान् न्यूनाधिकप्रशान्तये ।
अथवा सर्वपूर्तौ च होमादिकमथाचरेत् ॥ ३ ॥

मुण्डमालायाम्—

यस्य यावज्जपः प्रोक्तस्तद्दशांशमनुक्रमात् ।
तत्तद्द्रव्यैर्जपान्ते च होमं कुर्याद्दिने दिने ॥ १ ॥

पुरश्चरणचन्द्रिकायाम्—

ततो जपदशांशेन होमं कुर्याद्दिने दिने ।
सम्पूर्णायां प्रतिज्ञायां तर्पणादिकमाचरेत् ॥ १ ॥

तथाहोमाद्यशक्तौ च सनत्कुमारीये—

यद्यदङ्गं भवेद्भग्नं तत्संख्याद्विगुणो जपः ।
होमाभावे जपः कार्य्यो होमसंख्याचतुर्गुणः ॥ १ ॥
विप्राणां क्षत्रियाणां च वसुसंख्या गुणः स्मृतः ।
वैश्यानां वसुसंख्याकमेषां स्त्रीणामयं विधिः ॥ २ ॥
यं वर्णमाश्रितः शूद्रः स च तस्य विधिं चरेत् ।
अनाश्रितस्य शूद्रस्य दिक्संख्याकः समीरितः ।
शूद्रस्य विप्रभृत्यस्य तत्पत्न्या सदृशो जपः ॥ ३ ॥

तत्राप्यशक्तश्चेत् योगिनीहृदये—

होमकर्म्मण्यशक्तानां विप्राणां द्विगुणो जपः ।
इतरेषान्तु वर्णानां त्रिगुणादिसमन्वितः ।

त्रिगुणादिः होमसंख्यात्रिगुणजपः क्षत्रियेन कार्य्यः, वैश्येन चतुर्गुणः, शूद्रेण पञ्चगुणः ॥

जपसंख्या केन कर्तव्या तदाह रुद्रयामले—

नाक्षतैर्हस्तयवैर्वा न धान्यैर्न च पुष्पकैः ।
न चन्दनैर्मृत्तिकया जपसंख्या न कारयेत् ॥ १ ॥
लाक्षाकुशीतसिन्दूरगोमयञ्च करीषकम् ।
विलोड्य गुलिकां कृत्वा जपसंख्यान्तु कारयेत् ॥ २ ॥

वीरतन्त्रे—

नियमः पुरुषे ज्ञेयो न योषित्सु कदाचन ।
न न्यासो योषितां तत्र न ध्यानं न च पूजनम् ॥
केवलं जपमात्रेण मन्त्राः सिध्यन्ति योषिताम् ॥१॥

तदुक्तं कुलप्रकाशे—

यद्यदङ्गविहीनं स्यात्तत्संख्या द्विगुणो जपः ।
कुर्वीत त्रिचतुःपञ्च यथासंख्यं द्विजातयः ॥ १ ॥

इति जपनियमः । एतेन स्त्रीशूद्राणां होमाधिकारः । तथाच—शूद्राणां त्र्यस्रमिति कुण्डप्रकरणे शारदायाम् । स्त्रीणां होमाधिकारश्च । तत्र—

लाजैस्त्रिमधरोपेतैर्होमः कन्यां प्रयच्छति ।
अनेन विधिना कन्या वरमाप्नोति वाञ्छितम् ॥ १ ॥

तच्च ब्राह्मणद्वारा । तथाच तन्त्रे—

ॐकारोच्चारणाद्धोमात् शालग्रामशिलार्चनात् ।
ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत् ॥ १ ॥

इति साक्षान्निषेधात् । एवञ्च स्त्रीणामपि सर्व्ववैदककर्म्मणि शूद्र-तुल्यत्वप्रतिपादनात् ।

स्त्रीशूद्रकरसंस्पर्शो वज्रपातसमो मम ॥

इति भगवद्वचनात् ।

तथाच नारायणकल्पे—

अष्टाक्षरो महामन्त्रः सप्तार्णः शूद्रयोषिताम् ।
प्रणवादिश्च यो मन्त्रो न स्त्रीशूद्रे प्रशस्यते ॥ १ ॥

इति सर्वत्र स्त्रीणां शूद्रवद्व्यवहारः ।

सर्वेषां स्याद् द्विगुणो जपः । तथाच तन्त्रे—

यद्यङ्गं विहीयेत तत्संख्याद्विगुणो जपः ।
कर्त्तव्यश्चाङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः
नचेदङ्गं विहीयेत तद्विशिष्टमवाप्नुयात् ॥ १ ॥

तथाऽगस्त्यसंहितायाम्—

यदि होमेऽप्यशक्तः स्यात् पूजायां तर्प्पणेऽपि वा ।
तावत्संख्यजपेनैव ब्राह्मणाराधनेन वा ॥
भवेदङ्गद्वयेनैव पुरश्चरणमार्य्यवैः ॥ १ ॥

कुलसारे—

दीक्षाहीनान्यशून्यास्तु पूजयेद्वा स्वमन्दिरे ।
स याति परमेशानि नरकानेकविंशतिम् ॥ १ ॥
एवं यः कुरुते देवि ! पुरश्चरणकं प्रिये ! ।
सर्वपापविनिर्मुक्तो देवीसायुज्यमाप्नुयात् ॥ २ ॥

ततश्च—

गुरवे दक्षिणां दद्यात् भाजनाच्छादनादिभिः ।
गुरुसंतोषमात्रेण मन्त्रसिद्धिर्भवेद्ध्रुवम् ॥ १ ॥
सम्यक्सिद्ध्यैकमन्त्रस्य पंचांगोपासनेन च ।
सर्वे मन्त्राश्च सिद्ध्यन्ति त्वत्प्रसादात् सुरेश्वरि ! ॥ २ ॥
गुरुमूलमिदं सर्वमित्याहुस्तन्त्रवेदिनः ।
एकग्रामस्थितो नित्यं गत्वा वन्देत वै गुरुम् ॥ ३ ॥
गुरुरेव परं ब्रह्म तस्मादादौ तमर्च्चयेत् ।
तदन्ते महतीं पूजां कुर्यात्साधकसत्तमः ॥४॥

सुवासिनीं कुमारीश्च भूषणैरपि भूषयेत् ।
मिष्टान्नं बहुशः कार्य्यं भुञ्जीत बांधवैः सह ॥
एवं सिद्धमनुर्म्मन्त्री साधयेत्सकलेप्सितान् ॥ ५ ॥

तन्त्रे–

अथवान्यप्रकारेण पुरश्चरणमिष्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वाशुचिः पूर्वमुपोषितः ॥ १ ॥
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः ।
स्पर्शाद्विमुक्तिपर्य्यंतं जपेन्मन्त्रमनन्यधीः ॥ २ ॥

नद्याभावे तु–

यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः ।
ग्रहणादिविमोक्षान्तं जपेन्मन्त्रं समाहितः ॥ १ ॥
उपवासेऽप्यशक्तस्तु किञ्चिद्भक्ष्यं प्रकल्पयेत् ।
अथवान्यप्रकारेण पौरश्चारणिको विधिः ।
चन्द्रसूर्य्योपरागे च स्नात्वा प्रयतमानसः ।
स्पर्शाद्विमुक्तिपर्य्यन्तं जपेन्मन्त्रं समाहितः ॥ १ ॥
जपाद्दशांशतो होमं तथा होमाच्च तर्पणम् ।
एवं कृत्वा तु मन्त्रस्य जायते सिद्धिरुत्तमा ॥ २ ॥

मुण्डमालायाम्–

दृष्ट्वा स्नात्वा तु सङ्कल्प्य विमोक्षान्तं जपं चरेत् ।
तावद्यज्ञादिकं कुर्य्याद्ग्रहणान्ते शुचिः पुमान् ॥ १ ॥
एवं जपान्मन्त्रसिद्धिर्भवत्येव न संशयः ।
श्राद्धादेरनुरोधेन यदि जाप्यं त्यजेन्नरः ॥
स भवेद्देवताद्रोही पितॄन् सप्त नयन्त्यधः ॥ २ ॥

इति सनत्कुमारीयवचनाज्जपस्यावश्यकत्वम् । वस्तुतस्त्वारब्धपुरश्चरणविषयमिदम् । तथाहि आरब्धपुरश्चरणे यदि ग्रहणं भवेत्तदा श्राद्धानुरोधेन जपं न त्यजेत् ॥ एवं रात्रावपि पुरश्चरणविशेषो बोद्धव्य इति सर्वं समञ्जसम् ।

योगनीहृदये–

कल्पोक्तविधिना मन्त्री कुर्याद्धोमादिकं ततः ।
अथवा तद्दशांशेन होमादींश्च समाचरेत् ॥ १ ॥

तद्यथा–

अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् ॥

गोपालमन्त्रतर्पणे होमसमसंख्यात्वम् ।

यथागोपालमन्त्रस्य तर्पणं होमसंख्यया।
वर्णानामिह सर्वेषामिह त्यागं विदोविदुः॥
तदन्ते महतीं पूजां कुर्य्याद्ब्राह्मणभोजनम्॥ १॥
ततो मन्त्रस्य सिद्ध्यर्थं गुरुं संपूज्य तोषयेत्।
एवं च मंत्रसिद्धिः स्याद्देवता च प्रसीदति॥ २॥

क्रियासारे—

दीक्षाहीनान् पशून् यस्तु भोजयेद्वा स्वमन्दिरे।
स याति परमेशानि नरकानेकविंशतिम्॥ १॥

यद्यपि पुरश्चरणपदं पञ्चाङ्गपरम्। तथाच—"जपहोमौ तर्प्पणं चाभिषेको विप्रभोजनम्॥ पञ्चाङ्गोपासनं लोके पुरश्चरणमुच्यते"॥ १॥ तथापि ग्रहणादौ पुरश्चरणपदं जपमात्रपरम्। "सूर्य्योदयं समारभ्य यावत्सूर्य्योदयान्तरम्" "तावज्जप्त्वा निरान्तकः" "सर्वसिद्धिश्वरो भवेत्"। इत्यादिदर्शनात्। तत्र होमादेरभावात्तर्हि कथं ग्रहणपुरश्चरणे होमादिरिति चेद्वचनादेव जायते। न च पुरश्चरणस्य पंचांगत्वात्सर्वत्र तदेव स्यादिति वाच्यम्, ग्रहणे तद्विधानमनर्थकं स्यात्।

किञ्च ग्रहणे होमादिनियमान्नान्यत्र होमादिः। ग्रहणपुरश्चरणे होमादिविधानन्तु प्रकृतिभूतपञ्चाङ्गपुरश्चरणतुल्यता बोधनात्। अत एव ग्रहणे पञ्चाङ्गपुरश्चरणे कृते मोक्षप्रयोगेऽप्यधिकार इति। तदकरणे पुनः केवलजपमात्रपुरश्चरणे कृते नाधिकार इति सर्वसम्मतम्।

ग्रहणादौ पुरश्चरणस्य नित्यतामाह—

जपयज्ञं परित्यज्य पितृयज्ञं करोति यः।
स भवेद्देवताद्रोही पितृन्सप्त नयत्यधः॥ १॥

पुरश्चरणकालस्तु वाराहीतन्त्रे—

चन्द्रतारानुकूले च शुक्लपक्षे शुभेऽहनि।
आरम्भे तु पुरश्चर्य्यां हरौ सुप्ते न चाचरेत्॥
ग्रहणे च महातीर्थे न कालमवधारयेत्॥ १॥

---

## अथ पुरश्चरणप्रयोगः।

तत्र तावद्भूमेः परिग्रहं कृत्वा पुरश्चरणात्प्राक् तृतीयदिवसे क्षौरादिकं विधाय वेदिकायाश्चतुर्दिक्षु क्रोशं क्रोशद्वयं वा क्षेत्रं चतुरस्रमाहारादिविहारार्थं परिकल्प्य तत्र कूर्म्मस्वरूपं मण्डपं विधायैकभक्तं कुर्य्यात्। ततः परदिने स्नानादिकं विधाय शुद्धः सन् वेदिकायाश्चतुर्दि-

क्षु अश्वत्थोदुम्बरप्लक्षाणामन्यतमस्य वितस्तिमात्रान् कुशकीलकान् 'ॐ नमः सुदर्शनायास्त्राय फट्' इतिमंत्रेणाष्टोत्तरशताभिमन्त्रितान् वेदिनिकायदशदिक्षु ।

ये चात्र विघ्नकर्तारो भुवि दिव्यन्तरीक्षगाः ।
विघ्नभूताश्च ये चान्ये मम मन्त्रस्य सिद्धिषु ॥ १ ॥
मयैतत्कीलितं क्षेत्रं परित्यज्य विदूरतः ।
अपसर्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे ॥ २ ॥

इत्यनेन निखन्यतेषु "ॐसुदर्शनायास्त्राय फट्" इति मन्त्रेणास्त्रं सम्पूज्य पूर्वादिक्रमेणेन्द्रादिलोकपालान् । "ॐभूर्भुवः स्वरिन्द्रलोकपाल इहागच्छेत्यावाह्य पंचोपचारैश्च पूजयेत् ।

तथाच मुण्डमालायाम्—

पुण्यक्षेत्रादिकं गत्वा कुर्य्याद्भूमेः परिग्रहम् ।
तथाह्यहकमन्त्रस्य पुरश्चरणसिद्धये ॥
ममेयं गृह्यते भूमिर्म्मन्त्रोऽयं सिद्ध्यतामिति ॥ १ ॥

तथा—

ग्रामे क्रोशमितं स्थानं नद्यादा स्वेच्छया मतम् ॥
नगरादावपि क्रोशं क्रोशयुग्ममथापि वा ॥ १ ॥
क्षेत्रं वा यावदिष्टं तु विहारार्थं प्रकल्पयेत् ।
आहारादिविहारार्थं तावंतो भूमिमाक्रमेत् ॥ २ ॥
अश्वत्थोदुम्बरप्लक्षन्यग्रोधाः क्षीरशाखिनः
क्षीरवृक्षोद्भवान् कीलानस्त्रमन्त्राभिमन्त्रितान् ॥ ३ ॥
निखनेद्दशदिग्भागे तेष्वस्त्रं च प्रपूजयेत् ।
लोकपालान् पुनस्तेषु गंधाद्यैः पूजयेत्सुधीः ॥ ४ ॥

ततो मध्यस्थाने क्षेत्रपालं वास्त्वीशं च सम्पूज्य सर्वविघ्नविनाशार्थं गणेशं पूजयेत् ।

यथा—

ॐअद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा मत्कर्तव्यामुकमन्त्रपुरश्चरणकर्म्मणि विघ्ननाशार्थं गणेशपूजनमहं करिष्ये । इतिसंकल्प्य वेदिकामध्ये पंचोपचारैर्गणेशं पूजयेत् ।

तदुक्तम्—

क्षेत्रपालादिकं तत्र पूजयेद्विधिवत्ततः ।
क्षेत्रेशं वास्तुनामानं विघ्नेशं च समर्चयेत् ॥
दिक्पतिभ्यो बलिं दद्यात् ततः क्षेत्रं समाविशेत् ॥ १ ॥

ततो माषभक्तादिबलिना पूजितदेवताभ्यो बलिं दद्यात् । ततः—

ॐ ये रौद्रा रौद्रकर्म्माणो रौद्रस्थाननिवासिनः ।
मातरोऽप्युग्ररूपाश्च गणाधिपतयश्च ये ॥ १ ॥
विघ्नभूताश्च ये चान्ये दिग्विदिक्षुः समाश्रिताः ।
सर्वे ते प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ॥ २ ॥

इत्यनेन दशदिक्षु भूतेभ्यो बलिं दद्यात् । ततो गायत्रीं जपेत् । तथाच-

प्रातः स्नात्वा तु गायत्र्याः सहस्रं प्रयतो जपेत् ।
ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं ततः ॥ १ ॥

इति विद्याधराचार्य्यः । यत्तु—'प्रातः स्नात्वा तु गायत्र्या अयुतं प्रयतो जपेत्' । इति तत् पुनरत्यन्त्यपापशङ्कया ॥

ॐ अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा ज्ञाताज्ञातपापक्षयकामो अष्टोत्तरसहस्रसावित्रीजपमहं करिष्ये इति संकल्प्य जपेत् । तत उपवासं हविष्यं वा कृत्वा तत्परदिने उषसि स्नानादिकं विधाय स्वस्तिवाचनपूर्वकं संकल्पं कुर्य्यात् ।

ॐ अद्येत्यादिअमुकगोत्रोऽमुकदेवशर्म्मा अमुकदेवतायाः अमुकमंत्रसिद्धिप्रतिबन्धकाशेषदुरितक्षयपूर्वकामुकमन्त्रसिद्धिकामोऽद्यारभ्य-यावताकालेन स्येत्स्यति तावत्कालममुकमंत्रस्य इयत्संख्याजपतद्दशांश-होमतद्दशांशतर्पणतद्दशांशाभिषेकतद्दशांशब्राह्मणभोजनरूपपुरश्चरणमहं करिष्ये इति सङ्कल्पः । सामान्यपूजां विधाय जपं कुर्य्यात् । ततो होम-स्ततस्तर्पणम् । कुलार्णवे—

तर्पणं तु ततः कुर्य्यातीर्थोदैश्चन्द्रमिश्रितैः
जले देवं समावाह्य पाद्यादैरुदकात्मकैः ॥ १ ॥
सम्पूज्य विधिवद्भक्तया परिवारसमन्वितम् ।
एकैकमञ्जलिं तत्र परिवारान् प्रतर्प्पयेत् ॥ २ ॥
ततो होमदशांशेन तर्पयेत् परदैवतम् ॥ ३ ॥

तर्पणवाक्यं तु स्नानप्रकरणे बोध्यम् । अभिषेकवाक्यं तु—

नमोऽन्तं मूलमुच्चार्य्यामुकमदेवतामहमभिषिञ्चामीतिकलशमुद्रया स्वमूर्द्धन्यभिषेचयेत् । तथाच—

नमोऽन्तं मन्त्रमुच्चार्य्य तदन्ते देवताभिधाम् ।
द्वितीयान्तमहं पश्चादभिषिञ्चाम्यनेन तु ॥ १ ॥
अभिषिञ्चेत्स्वमूर्द्धानं तोयैः कुम्भाख्यमुद्रया ॥ २ ॥

शक्तिविषये नीलतन्त्रे—

मंत्रान्ते नाम चोच्चार्य्य सिञ्चामीति नमःपदम् ॥ १ ॥ इति,

ततो दक्षिणा-अद्यकृतैतत् अमुकदेवस्यामुकमन्त्रपुरश्चरणकर्म्मणः साङ्गतार्थं दक्षिणामिदं काञ्चनं वह्निदैवतं अमुकगोत्राय गुरवे तुभ्यमहं सम्प्रददे । ततोऽच्छिद्रावधारणं कुर्य्यात् ।

---

### अथ ग्रहणपुरश्चरणसङ्कल्पः ।

तद्यथा—ॐअद्येत्यादिसराहुग्रस्ते निशाकरे दिवाकरे वा अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकदेवताया अमुकमन्त्रसिद्धिकामो ग्रासाद्विमुक्तिपर्य्यन्तम् अमुकमन्त्रस्य जपरूपपुरश्चरणमहं करिष्ये । इति सङ्कल्प्य जपेत् । ततस्तद्दिने परदिने वा स्नानादिकं विधाय सङ्कल्पं कुर्यात् ।

ॐअद्येत्यादि अमुकमन्त्रस्य कृतैतद्ग्रहणकालीन इयत्संख्यजपतद्दशांशहोमतद्दशांशतर्पणतद्दशांशाभिषेकतद्दशांशब्राह्मणभोजनकर्म्माण्यहं करिष्ये इति सङ्कल्प्य होमादिकं कुर्य्यात् । दक्षिणादिकं तु पूर्ववत् ।

---

### अथ कूर्म्मचक्रम्—

दीपस्थानं समाश्रित्य कृतं कर्म्मफलप्रदम् ।
दीप्यते पुरुषो यत्र दीपस्थानं तदुच्यते ॥ १ ॥
चतुरस्रां भुवं भित्वा कोष्ठानां नवकं लिखेत् ।
पूर्वकोष्ठादिविलिखेत्सप्तवर्ग्गाननुक्रमात् ॥ २ ॥
लक्षमीशे मध्यकोष्ठे स्वरान्युग्मक्रमाल्लिखेत् ।
दिक्षु पूर्वादिता यत्र क्षेत्राद्यक्षरसंस्थितिः ॥ ३ ॥
मुखं तत्तस्य जानीयाद्धस्तावुभयतः स्थितौ ।
कोष्ठे कुक्षी उभे पादौ द्वौशिष्टंपुच्छमीरितम् ॥ ४ ॥
क्रमेणानेन विभजेन्मध्यस्थमपि भागतः ।
मुखस्थो लभते सिद्धिं करस्थः स्वल्पजीवनः ॥ ५ ॥
उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात् ।
पुच्छस्थः पीडयते मन्त्री बन्धनोच्चाटनादिभिः ॥ ६ ॥
कूर्म्मचक्रमिदं प्रोक्तं मन्त्राणां सिद्धिदायकम् ।
यस्य यज्ञफलं नास्ति सर्वानर्थाय कल्पते ॥ ७ ॥

पिङ्गलायाम्—

कूर्म्मचक्रमविज्ञेया यः कुर्य्याज्जपयज्ञकम् ।
तस्य यज्ञफलं नास्ति सर्वानर्थाय कल्पते ॥ १ ॥

---

## अथ मन्त्राणां दशसंस्काराः ।

गौतमीये—

जननं जीवनं पश्चात्ताडनं बोधनं तथा ।
तथाभिषेको विमलीकरणाप्यायते पुनः ॥ १ ॥
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ।
स्वर्णादिपात्रे संलिख्य मातृकायन्त्रमुत्तमम् ॥ २ ॥
काश्मीरचन्दनेनापि भस्मना वाथ सुव्रते ।
काश्मीरं शक्तिसंस्कारे चन्दनं वैष्णवे मणौ ॥ ३ ॥
शैवे भस्म समाख्यातं मातृकायन्त्रलेखने ।
शैवादिमन्त्रभेदश्च प्रोक्तं द्रव्यत्रयं शुभे ॥
मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ॥ ४ ॥
यन्त्रस्य दिक्षु रं विदिक्षु ठं लिखेत् ।

तथाच गौतमीये—

कादिमांताः पञ्चवर्गाः पूर्वादिभ्यो न्यसेद्यदि ।
यदि वांता शादिहान्तालक्षमीशे प्रविन्यसेत् ॥ १ ॥
चतुरस्रं चतुर्द्वारं दिक्षु रं ठं विदिक्षु च ।
व्योमेन्दा रसनाणं तु कार्णांतु कमठां छदैः ॥ २ ॥

स्फुरत्केशरम्, वर्गाब्जासिवसुच्छदवसुमतीगेहेन संवेष्टितम्, आशास्वस्त्रिषुलांतलङ्गलियुजाक्षौणीपुरेणावृतम्; यन्त्रं वर्णतनोः परं निगदितं सौभाग्यसम्पत्करम्; मातृकायन्त्रं पंक्तिक्रमेण विधिनामुनिभिस्तत्र निश्चितम् ॥

प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत्सुधीः ।
प्रत्येकशतवारं तु जीवनं तदुदाहृतम् ॥ १ ॥
मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ।
प्रत्येकं वायुबीजेन पूर्ववत्ताडनं मतम् ॥ २ ॥
विलिख्य मन्त्रवर्णांस्तु प्रसूनैः करवीरजैः ।
तन्मन्त्रवर्णसंख्याकैर्हन्याद्रेफेण बोधनम् ॥ ३ ॥
तत्तन्मन्त्रोक्तविधिनात्वभिषेकः प्रकीर्तितः ।
अश्वत्थपल्लवैः सिंचेन्मन्त्री मन्त्रार्णसंख्यया ॥ ४ ॥
सञ्चिन्त्य मनसा मन्त्रं सुषुम्णा मूलमध्यतः ।
ज्योतिर्मन्त्रेण विधिवदाप्यायनविधिः स्मृतः ॥ ५ ॥
मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं मतम् ।
मधुना शाक्तमन्त्रेषु वैष्णवे चेन्दुमज्जलैः ॥

शैवे घृतेन दुग्धेन तर्प्पणं सम्यगीरितम् ॥ ६ ॥

अभिषेकोऽपि तथा ॥

तारमायारमायोगेमनोर्द्दीपनमुच्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ॥ १ ॥
संस्कारा दश संप्रोक्ताः सर्वतन्त्रेषु गोपिताः ।
यान् कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमाप्नुयात् ॥ २ ॥

मलत्रयमिति—आलव्यं मायिकं कार्म्मणं च । प्रपञ्चसारे—

मायिकं नाम योगोत्थं पौरुषं कार्म्मणं मलम् ।
आलव्यं तद्वयं प्रोक्तं निषिद्धं तन्मलत्रयम् ॥ १ ॥

तारमागारमायोग इति तारमायारमाबीजपुटितं मन्त्रमष्टोत्तरशतं जपेदित्यर्थः । तथाच विश्वसारे—

(१)तारमायारमाबीजपुटितेन जपेन्मनुम् ।
अष्टोत्तरशतं चैव दीपयेत्साधकोत्तम ॥ १ ॥ इति ।

---

## अथ कलावतीदीक्षाप्रयोगः—

शिष्यः पूर्वमुपोषितः कृतनित्यक्रियः स्वस्तिवाचनपूर्वकं संकल्पं कुर्य्यात् । तद्यथा-ॐ अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा धर्म्मार्थकाममोक्षप्राप्तिकामोऽमुकदेवतायाः अमुकमंत्रदीक्षामहं करिष्ये इति संकल्पः । गुरुं वृणुयात् । यथाॐ साधु भवान् आस्ताम् । ॐ साध्वहमासे इति । ॐ अर्च्चयिष्यामो भवन्तम् । ॐ अर्च्चय । ततो गन्धपुष्पवस्त्रालङ्कारादिभिर्गुरुमभ्यर्च्य दक्षिणजानुं धृत्वा पठेत् । ॐ अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकदेवताया मत्कर्त्तव्यामुकमन्त्रदीक्षाकर्म्मणि अमुकगोत्रममुकदेवशर्म्माणमेभिः पाद्यादिभिरभ्यर्च्य गुरुत्वेन भवन्तमहं वृणे । ॐवृतोस्मीत्युत्तरम् । यथाविहितं कर्म्म कुरु । यथाज्ञानतश्च करवाणीति प्रतिवचनम् । ततो गुरुराचम्य द्वारदेशे सामान्यार्घं कुर्य्यात् । तद्यथा-वामे त्रिकोणवृत्तभूबिम्बं विलिख्य । ॐआधारशक्तये नम इति सम्पूज्य फाडिति मन्त्रेण पात्रं प्रक्षाल्य साधारं तत्र निधाय नम इति मन्त्रेण जलेनापूर्य्य अङ्कुशमुद्रया सूर्य्यमण्डलात् 'गङ्गेचे'त्यादिना तीर्थमावाह्य प्रणवेन गन्धादनिःक्षिप्य धेनुमुद्रां प्रदर्श्य ॐ

---

(१) तारः—प्रणवः, माया—भुवनेश्वरी, रमाबीजम्—श्रीमिति; तारमायारमाबीजमित्यस्यार्थः ।

इत्यष्टधा दशधा वा जप्त्वा फडिति मंत्रेण तज्जलेन द्वारमभ्युक्ष्य द्वार-
पूजां समारभेत्।

तथा च—

त्रिकोणवृत्तं भूबिम्बं मण्डलं रचयेत्ततः।
आधारशक्तिं सम्पूज्य तत्राधारं विनिक्षिपेत्॥ १
अस्त्रेण पात्रं संशोध्य हृन्मंत्रेण प्रपूजयेत्।
निक्षिपेत्तीर्थमावाह्य गन्धादीन् प्रणवेन तु॥
दर्शयेद्धेनुमुद्रां वै सामान्यार्घमिदं स्मृतम्॥ २॥

इति गौतमीयवचनात्। अष्टधा प्रणवजपः, विशेषार्घे तथा दर्श-
नात्॥ शक्त्यादौ दशधा तदर्थेन तथादर्शनात्। फडिति तज्जलेन
द्वारमभ्युक्ष्य द्वारपूजां (१)कुर्य्यात्।

तद्यथा—ऊर्द्धोदुम्बरे ॐविघ्नाय नमः ॐमहालक्ष्म्यै नमः ॐसरस्वत्यै
नमः। दक्षिणशाखायाम् ॐविघ्नाय नमः, वामशाखायां-ॐक्षेत्रपाला-
य नमः, तयोः पार्श्वयोः-ॐगङ्गायै नमः, ॐयमुनायै नमः। देहल्याम्
ॐअस्त्राय नमः इति पूजयेत् पुष्पवारिभिः। अशक्तश्चेत् द्वारदेवताभ्यो
नमः इत्येतावन्मात्रम्। त्रिपुरादिपूजादिषु स्वतन्त्रतन्त्रे—

गणेशं क्षेत्रपालं च योगिनीं बटुकं तथा।
गङ्गां च यमुनां चैव लक्ष्मीं वाणीं ततो यजेत्॥ १॥

इतिविशेषः। वैष्णवे च—

नन्दः सुनन्दश्चण्डश्च प्रचण्डो बल एव च।
प्रबलो भद्रनामा च सुभद्रो विघ्नवैष्णवाः॥
प्रणवादिनमोन्तेन नाममन्त्रेण पूजयेत्॥ १॥

ततो दक्षिणपादपुरःसरं वामशाखां स्पृशन्दक्षिणाङ्गं सङ्कोचयन्
मण्डपान्तः प्रविश्य नैर्ऋत्यां ॐवास्तुपुरुषाय नमः। ॐब्रह्मणे नम इति
पूजयेत्। ततो हृदयमंत्रेण दिव्यदृष्ट्यावलोकयन्दिव्यान्विघ्नानुत्सार्य्य
अस्त्राय फडिति मंत्रेण जलेनान्तरिक्षगान् विघ्नानुत्सार्य्य वामपार्ष्णिघा-
तत्रयेण भौमान् विघ्नानुत्सार्य्य फडिति मन्त्रेण जप्त्वा विकिरानादाय

ॐ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥ १॥ इति विकिरयेत्।
लाजाचन्दनसिद्धार्थभस्मदूर्वाकुशाक्षतः।
विकिरा इति सन्दिष्टाः सर्वे विघ्नौघनाशकाः॥ १॥

---

(१) अत्रोच्यते—द्वारे सति तत्रैव,। तदभावे मनसा द्वारतोरणादिकं परिक-
ल्प्य पूजयेत्।

अनन्तरं देशिकेन्द्रो दिव्यदृष्ट्यावलोकनैः ।
दिव्यानुत्सारयेद्विघ्नानस्त्राभिश्चान्तरिक्षगान् ॥ २ ॥
पार्ष्णिघातैस्त्रिभिर्भौमानिति विघ्नान्निवारयेत् ।
ततोऽक्षतान्समादाय दत्ते नाराचमुद्रया ॥
प्रक्षिपेद्‌ दृवस्त्रमन्त्रेण गृहान्तर्विघ्नशान्तये ॥ ३ ॥

"अपसर्पन्तु ते" इति शारदीयात् । सम्मोहनतन्त्रे—
विकारान् विकरेत्तत्र सप्तवारान् शरानुना" इति ।

ततो ह्रीं आधारशक्तिकमलासनाय नमः इत्यासनं सम्पूज्य धृत्वा पठेत् । आसनमन्त्रस्य मेरुपृष्ठऋषिः सुतलं छन्दः कूर्म्मो देवता आसनपरिग्रहणे विनियोगः ।

ॐपृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां नित्यं पवित्रं कुरु चासनम् ॥ १ ॥

इति पठित्वा स्वस्तिकादिक्रमेणोपविशेत् । उपविश्य वा विघ्नानुत्सारयेत् । तन्त्रान्तरे—

आदौ विघ्नं समुत्सार्य्य पश्चादासनकल्पनम् ।
अथवा चासने स्थित्वा विघ्नानुत्सारयेत्सुधीः ॥ १ ॥

ततः पञ्चगव्येन मण्डपं परिशोधयेत् । तथा गौतमीये—
पञ्चगव्येन तद्देहं मण्डपं च विशोधयेत् ॥१॥

पञ्चगव्यप्रमाणं तु तत्रव—
पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते ।
घृतं च पलमात्रं स्याद्गोमयं तोलकद्वयम् ॥ १ ॥
दधिप्रसृतिमात्रं स्यात्पञ्चगव्यमिदं स्मृतम् ।
अथवा पञ्चगव्यानां समानो भाग इष्यते ॥ २ ॥
मूलमन्त्रेण सम्मन्त्र्य तेनैव परिशोधयेत् ।
तेन सर्वविशुद्धिः स्यात् सर्वपापनिकृन्तनम् ॥ ३ ॥

ततः स्वदक्षिणे पूजाद्रव्याणि वामपार्श्वे सुवासितताम्बूलं पूर्णकुम्भं हस्तक्षालनार्थं पात्रान्तरं पृष्ठदेशे स्थापयेत् । सर्वदिक्षु घृतप्रदीपांश्च स्थापयित्वा कृताञ्जलिर्भूत्वा वामे ॐगुरुभ्यो नमः । ॐपरमगुरुभ्यो नमः । ॐपरापरगुरुभ्यो नमः । परमेष्ठिगुरुभ्यो नमः । दक्षिणे ॐ गणेशाय नमः । मध्ये अमुकदेवतायै नमः । तथा च—

कृताञ्जलिपुटो भूत्वा वामे गुरुत्रयं यजेत् ।
गुरुं च परमादिं च परापरगुरुं तथा ।
दक्षिणे च गणेशं च मूर्द्धि देवं विभावयेत् ॥ १ ॥

ततः फडिति मन्त्रेण गन्धपुष्पाभ्यां करौ संशोध्य ऊर्द्धोर्द्धतालत्रयं दत्वा छोटिकाभिर्दशदिग्बन्धनं कुर्य्यात्। ततो रमिति जलधारया वह्निप्रकारं चिन्तयेत्। ततो भूतशुद्धिः। ततो मातृकान्यासः। ततः प्राणायामः। ततः पीठन्यासः। ततः ऋष्यादिन्यासः। ततो मन्त्रन्यासः। ततो मुद्रादर्शनम्। ततो ध्यानम्। ततो मानसीपूजा। ततो विशेषार्घ्य-स्थापनम्। तद्यथा—

अर्घ्यस्य त्रीणि पात्राणि पाद्यस्यापि त्रयं भवेत्।
तथैवाचमनीयानि पात्राणि च विभागशः॥
तथाकरणदौर्बल्यादेकमेव प्रशस्यते॥ १॥

किन्तु सामान्यार्घ्यविशेषार्घ्यद्वयस्यावश्यकत्वम्। तथाच नव-रत्नेश्वरे—

एकपात्रं न कर्त्तव्यं यदि साक्षान्महेश्वरः।
मन्त्राः पराङ्मुखा यान्ति आपदश्च पदे पदे॥
इह लोके दरिद्रः स्यान्मृते च पशुतां व्रजेत्॥ १॥

राघवभट्टधृतम्—

सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्य्यार्च्चनं विना।

अब्जः-शंखः; स्ववामे त्रिकोणमण्डलं कृत्वा तदुपरि त्रिपदीमारोप्य फडिति शंखं प्रक्षाल्य तदुपरि संस्थाप्य नम इति मन्त्रेण गन्धपुष्पाक्षत-दूर्वादि निक्षिप्य विमलजले विलोममातृकावर्णैर्मूलेन पूरयेत्॥ क्षँ लँ हँ सँ षँ शँ वँ लँ रँ यँ मँ भँ बँ फँ पँ नँ धँ दँ थँ तँ णँ ढँ डँ ठँ टँ ञँ झँ जँ छँ चँ ङँ घँ गँ खँ कँ अँः अँ औँ ओँ ऐँ एँ ॡँ ऌँ ॠँ ऋँ ऊँ उँ ईँ इँ आँ अँ। इत्यनेन वह्निमण्डलाय दशकलात्मने नमः इति त्रिपादिकायाम्। अं सूर्य्यमण्डलाय द्वादशकलात्मने नम इति शंखे। उं सोममण्डलाय षोडशकलात्मने नमः इति जलेन सम्पूज्य।

ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्म्मदे सिन्धुकावेरि जलेऽस्मिन्सान्निधिं कुरु॥

इत्यनेनांकुशमुद्रया सूर्य्यमण्डलात्तीर्थमावाह्य। अमुकि देवि इहा-गच्छागच्छ २ इह तिष्ठ २ स्वहृदयाद्देवतां तत्रावाह्य हूमिति तर्ज्जनीभ्या-मवगुंठ्य वषडिति गालिनीं मुद्रां प्रदर्श्य वौषडिति तज्जलं वीक्ष्य पुनर-ङ्गमन्त्रैः सकलीकृत्य गन्धपुष्पाभ्यां देवतां सम्पूज्य तदुपरि मत्स्यमुद्रा-माच्छाद्य मूलमन्त्रमष्टधा जपेत्।

तथाच गौतमीये—

गन्धपुष्पैः समभ्यर्च्य कृष्णाख्यं धाम योजयेत्।

अष्टकृत्वो जपेन्मन्त्रं शिखायां गालिनीं न्यसेत् ॥

अत्र कृष्णपदं तत्तद्देवतापरम्। ततो धेनुमुद्रां प्रदर्श्यास्त्रेण संरक्ष तस्मात् किञ्चिज्जलं प्रोक्षणीपात्रे निःक्षिप्य तेनोदकेनात्मानं पूजोपकरणं चाभ्युक्ष्य पीठन्यासक्रमेण शरीरे धर्म्मादीन् पूजयेत्। तद्यथा—दक्षिण-स्कन्धे-ॐधर्म्माय नमः। वामे-ज्ञानाय नमः। एवं वामोरौ वैराग्याय। दक्षिणे-ऐश्वर्य्याय। मुखे-धर्माय। वामपार्श्वे-अज्ञानाय। नाभौ-अवैराग्याय। दक्षिणपार्श्वे-अनैश्वर्य्याय। सर्वत्र प्रणवादिनमोऽन्तेन पूजयेत् ॥ तथाच शारदायाम्—

अंशोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः।
धर्म्मंज्ञानं च वैराग्यमैश्वर्य्यं चाप्यनुक्रमात्।
मुखपार्श्वनाभिपार्श्वेष्वधर्म्मादीन् प्रकल्पयेत् ॥ १ ॥

हृदये-अनन्ताय नमः। एवं पद्माय नमः ॥ अं अर्कमण्डलाय द्वाद-शकलात्मने नमः। ॐसोममण्डलाय षोडशकलात्मने नमः। ॐमं वह्नि-मण्डलाय दशकलात्मने नमः। संसत्वाय नमः। रं रजसे, तं तमसे, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने, नमः सर्वत्र।

शारदायाम्—

न्यासं क्रमेण देहे स्वे धर्म्मादींश्च प्रपूजयेत्।
पुष्पाद्यैः पीठमन्वन्तमस्मिन् परमदेवताम् ॥ १ ॥

ततो हृत्पद्मस्य पूर्वादिकेशरेषु पीठशक्तीः सम्पूज्य मध्ये पीठमनुं यजेत्। हृदये मूलदेवतां नैवेद्यं विना गन्धाद्यैः पूजयेत् ॥

तथाच निबन्धे—विना नैवेद्यं गन्धाद्यैरुपचारैः समर्चयेत्। तत उत्तमाङ्गहृदाधारपादसर्वाङ्गकेषु। मूलेन पञ्च पुष्पाञ्जलिं दत्वा यथा-शक्तिमन्त्रं जप्त्वा "ॐगुह्यातिगुह्यगोप्त्री त्वम्"इत्यादिना जपं स-मर्प्पयेत्।

तथाच निबन्धे—

पञ्चकृत्वस्ततो दद्यात्पुष्पाञ्जलिमनन्यधीः।
उत्तमाङ्गहृदाधारपादसर्वाङ्गके क्रमात् ॥ १ ॥

सर्वमेतत् प्रोक्षणीपात्रस्थेन वारिणा विदध्यात्। ततः प्रोक्षिण्यां तोयं विसृज्य पूर्ववदापूर्य बहिः पूजामारभेत्। ततो वक्ष्यमाणशारदोक्तस-र्वतोभद्रमण्डलाद्यन्यतमं विधाय तत्र स्थापयेत्। ॐमण्डलाय नम इति मण्डलं सम्पूज्य शालिभिः कर्णिकामध्यमापूर्य्य तदुपरि तण्डुला-नास्तीर्य तेषु दर्भानास्तीर्य्य विष्टरं चाक्षतायुतं तदुपरि न्यसेत्। ततो मण्डले एताः पूजयेत्।

तद्यथा पीठमध्ये-ॐआधारशक्तये नम इत्यादिपीठमन्त्रान्तं तत्तत्पट-लोक्तां पूजां कुर्य्यात् । मण्डले प्रादक्षिण्येन यं धूम्रार्च्चिषे नम इत्या-दिवह्नेर्द्दशकलां विन्यस्य सम्पूजयेत् । ततो हेमादिरचितं कुम्भं झडिति प्रक्षाल्य चन्दनागुरुकर्पूरैः पूरयित्वा त्रिगुणस्तन्तूनासंवेष्ट्य ॐकुम्भाय नमः इति गन्धपुष्पाभ्यां सम्पूज्य विष्टराक्षतं नव रत्नानि च प्रक्षिप्य प्रणवमुच्चरन् कुम्भपीठयोरैक्यं विभाव्य पीठे स्थापयेत् ।

गौतमीये कुम्भध्यानं तु—

हैमं रूप्यं तथा ताम्रं मार्तिकं वा स्वशक्तितः ।
वित्तशाठ्यं न कर्त्तव्यं कृते निष्फलमाप्नुयात् ॥ १ ॥
षट्त्रिंशदंगुलं कुम्भं विस्तारस्तान्नतिशालिनम् ।
षोडशं द्वादशं वापि ततो न्यूनं न कारयेत् ॥ २ ॥

अत्र राघवभट्टः—

पञ्चात्मिकायां दीक्षायां कलशान् पञ्च योजयेत् ।

कुम्भे प्रादक्षिण्येन सूर्य्यस्य किलाः न्यसेत् । कुम्भं तपिन्यै नमः । इति द्वादशकला विन्यस्य संपूजयेत् । ततः—

क्षीरद्रुमकषायेण पलाशत्वग्भवेन वा ।
तीर्थोदकैर्वा कर्पूरगंधपुष्पसुवासितैः ॥ १ ॥
आत्मभेदेन विधिना मातृकां प्रतिलोमतः ।
देयं मन्त्रं जपन् कुम्भं पूरयेद्देवताधिया ॥ २ ॥

ततश्चन्द्रस्यामृतादिषोड़शकलाजले प्रादक्षिण्येन विन्यस्य 'अमृतायै नमः' इत्यादिना संपूज्य शंखान्तरं क्षीरकषायादिद्रव्यैरापूर्य गन्धाष्टकं विलोडय तस्मिन् जले सकलाः कला आवाह्य पूजयेत् ।शारदायाम—

गन्धाष्टकं तु त्रिविधं शक्तिविष्णुशिवात्मकम् ।
चन्दनागुरुकर्पूरचारेकुंकुमरोचना ॥
जटामांसीकपियुताशक्तेर्गन्धाष्टकं विदुः ॥ १ ॥
चंदनागुरुह्रीवेरकुष्टकुंकुमसेव्यकाः ।
जटामांसीमुरमिति विष्णुगन्धाष्टकं स्मृतम् ॥ २ ॥
चन्दनागुरुकर्पूरतमालजलकुंकुमम् ।
कुशीतकुष्टसंयुक्तं शैवगंधाष्टकं स्मृतम् ॥ ३ ॥

अस्यार्थः-चंदनागुरुकर्पूरकृष्णशटीकुंकुमरोचना जटामांसी गांटना इतिशक्तेर्गंधाष्टकम् ॥ चंदनागुरुवालाचकुंकुमश्वेतवीरणमूलजटामांसीदेवदारु इति विष्णोः, चंदनागुरुकर्पूरतमालवालकुंकुमरक्तचंदनकुडमिति शिवस्य ।

तत्रादौ वह्नेर्दशकलाः पूजयेत् । तद्यथा—

वह्नेर्धूम्रार्चिरादिदशकला इहागच्छत २ इहतिष्ठत २ इह संनिहिता भवत इत्यावाहयेत् । ततो मूलमन्त्रं प्रतिलोमेन जपन् मंत्रस्य देवतां मनसा ध्यायन् आसां प्राणप्रतिष्ठां कुर्य्यात् ।

तद्यथा-आँ ह्रीं क्रों हं सः धूम्रार्चिरादिवन्हेर्दशकलानां प्राणा इह प्राणाः । आं ५ धूम्रर्चिरादिवन्हेर्दशकलानां जीव इह स्थितः । आँ ५ धूम्रार्चिरादिवन्हेर्दशकलानां सर्वेन्द्रियाणि । आँ ५ धूम्रार्चिरादिवन्हेर्दशकलानां वाङ्मनश्चक्षुश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । इति प्राणं प्रतिष्ठाप्य गंधादिभिः पूजयेत् । धूम्रार्चिरादिभ्य एष गंधो नमः इत्यादिना पंचोपचारैः पूजयेत् । ततः प्रत्येकेन पूजयेत्। तद्यथा यं धूम्रार्चिषे नमः। रं ऊष्मायै० लं ज्वलिन्यै०, वं ज्वालिन्यै०, शं विस्फुलिंगिन्यै०, षंसुश्रियै०, सं सुरूपायै०, हं कपिलायै०; लं हव्यवहायै०; क्षं कव्यवहायै नमः सर्वत्र। शक्तश्चेत् प्रत्येकमावाह्य पाद्यादिभिः पूजयेत् । ततः सुर्य्यस्य तपिन्यादिद्वादशकलाःपूर्ववत् प्राणप्रतिष्ठावाहनादि कृत्वा पूजयित्वा च प्रत्येकेन पूजयेत् । तद्यथा-कं भं तपिन्यै, खं बं तापिन्यै; गं फं धूम्रायै; घं पं मरिच्यै; ङं नं ज्वालिन्यै; चं धं रुच्यै छं दं सुषुम्णायै; जं थं भोगदायै, झं तं विश्वायै, ञं णं बोधिन्यै, टं ढं धारिण्यै, ठं डं क्षमायै; इतिप्रत्येकं पूजयेत् । नमः सर्वत्र । शक्तश्चेत्प्रत्येकमावाह्य पाद्यादिभिः पूजयेत् ।

तथाच निबन्धे—कभाद्यावसुदाश्च सौराष्टएडान्ताद्दशारिता । ततश्चन्द्रस्यामृतादिषोडशकलानां प्राणप्रतिष्ठादिकं कृत्वा पूर्ववत्पूजयेत् । ततः प्रत्येकेन पूजयेत् ।

तद्यथा-अं अमृतायै । आं मानदाय । इंपूषायै । ईंतुष्ट्यै उं पुष्टयै ऊं रत्यै ऋं धृत्यै ॠं शशिन्यै ऌं चन्द्रिकायै ॡं कान्त्य एंज्योत्स्नायै ऐंश्रियै ओंप्रीत्यै औंअङ्गदायै, अंपूर्णायै, अःपुर्णामृतायै । नमः सर्वत्र । शक्तश्चेत्प्रत्येकमावाह्य गंधादिभिः पूजयेत् ।

ततः पञ्चाशत्कलापूजा यथा—सृष्ट्यादिकचतुर्वर्गकलाः पूर्ववत् प्राणप्रतिष्ठां कृत्वा पूजयेत् । प्रत्येकं पूजनं तु—कं सृष्ट्यै नमः, खं ऋद्ध्यै नमः, गं स्मृत्यै, घं मेधायै, ङं कान्त्यै, चं लक्ष्म्यै, छं धृत्यै, जं स्थिरायै; झं स्थित्यै; ञं सिद्ध्यै नमः सर्वत्र । शक्तश्चेत्प्रत्येकमावाह्य पाद्यादिभिः पूजयेत् ।

तथाच—

"हंसः शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जागोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ इति" जप्त्वाह्य

शंखे पूजयेत् ॥ ततो जरादिटतवर्गकलाः पूर्ववत् प्राणप्रतिष्ठादिकं कृत्वा पूर्ववत्पूजयेत् ॥

प्रत्येकं तु—टं जरायै, ठं पालिन्यै, डं शान्त्यै; ढं ऐश्वर्यै, णं रत्यै, तं कामिन्यै, थं वरदायै, दं ह्लादिन्यै, धं प्रीत्यै, नं दीर्घायै, नमः सर्वत्र । शक्तश्चेत्प्रत्येकमावाह्य पूजयेत् ।

ततः ॐ "प्रतद्विष्णुस्तवते वीर्य्येण मृगो न भीमः कुचरोगिरिष्ठाः॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंति भुवनानि विश्वा" ॥ इति जप्त्वावाह्य पूजयेत् । तथाच तन्त्रे—

प्रतिद्विष्णुस्तवते वीर्येण मृगो न भीम इत्येपि ॥ कुचरोपदतः प्रोतेमरिष्ठापदतो लिखेत् ॥ यस्योरुषित्रिषुपदतो विक्रमणेष्वपि ॥ क्षियन्तिपभुवनानीति विश्वापदं समुद्धरेत् ॥

ततस्तीक्ष्णादिपयवर्गदशकलाः पूर्ववत् प्राणप्रतिष्ठां कृत्वा पूजयेत् ॥

पं तीक्ष्णायै, फं रौद्रायै, बं भयायै, भं निद्रायै, मं तन्द्र्यै, यं क्षुधायै, रं क्रोधिन्यै, लं क्रियायै, वं उत्कारिण्यै । शं मृत्यवे । नमः सर्वत्र । शक्तश्चेत्प्रत्येकमावाह्य पाद्यादिभिः पूजयेत् । ततः—

ॐ "त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
ऊर्वारुकमिव बंधनान्मृत्योर्मुक्षीयमामृतात्" ॥

इति जप्त्वावाह्य पूजयेत् । ततः पीतादिषवर्गपञ्चकलाः पूर्ववत् प्राणप्रतिष्ठां कृत्वावाह्य पाद्यादिभिः पूजयेत् ।

तद्यथा—षं पीतायै, नमः । सं श्वेतायै, हं अरुणायै, ळं असितायै, क्षं अनन्तायै, नमः सर्व्वत्र ।

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवि वचक्षुराततम् ॥ इत्यावाह्य पाद्यादिभिः पूजयेत् ।

शक्तश्चेत्प्रत्येकमावाह्य पूजयेत् । तद्यथा—अं निवृत्त्यै, आं प्रतिष्ठायै, इं विद्यायै, ईं शान्त्यै, उं इन्धिकायै, ऊं दीपिकायै, ऋं रेचिकायै, ॠं मेचिकायै, ऌं परायै, ॡं सूक्ष्मायै, एं सूक्ष्मामृतायै, ऐं ज्ञानामृतायै, ॐआप्यायन्यै, औ व्यापिन्यै, अं व्योमरूपायै । अः अनन्तायै, नमः सर्व्वत्र । शक्तश्चेत्प्रत्येकमावाह्य पाद्यादिभिः पूजयेत् । ॐ"तद्विप्रासोविन्यवोजागृवांसः समिन्धते। विष्णोर्यत्परमं पदम् ॥ विष्णुर्योनिं कल्पयतु त्वष्टारूपाणि पिंषतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं देहि सिनीवाली गर्भं देहि सरस्वति । गर्भंतेऽश्विनौ देवावाधत्तां पुष्करस्रजौ" इति जप्त्वावाह्य पूजयेत् ॥ ततः कलात्मकं तत्

शंखस्थं क्वाथं कुम्भे निक्षिपेत् ॥ ततोऽश्वत्थपर्णसचूतपल्लवैरिंद्रअपरा-जितावल्लीवेष्टितैः कल्पवृक्षबुद्ध्या कुम्भवक्त्रं निधाय तस्मिन्कुम्भवक्त्रे सपलाक्षतं चषकं कल्पवृक्षफलबुद्ध्या स्थापयेत् । ततः कुम्भं निर्म्मलेन क्षौमयुग्मेन संवेष्ट्य मूलेन कुम्भे मूर्तिं प्रकल्प (सङ्कल्प्य) यथोक्तरूपं देवतां ध्यात्वा तस्यामावाहनं कृत्वा पूजयेत् ॥ मूलमन्त्रमुच्चारयन्नमुक इहागच्छागच्छ इहतिष्ठ तिष्ठ इह सन्निधेहि इह सन्निरुध्यस्व इत्यावाहनादिकं कृत्वा हुमित्यवगुंठ्य देवताङ्गे षडङ्गन्यासं कृत्वा वमितिधेनुमुद्रया अमृतीकृत्य परमीकरणमुद्रया परमीकुर्यात् । ततः प्राणप्रतिष्ठां कृत्वा षोडशोपचारैः पूजयेत् । तथा मूलमुच्चार्य्य एतत् पाद्यं अमुकदेवतायै नम इति पादाम्बुजे । एतत्—

श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् । सुधामन्त्रेण वदने दद्यादाचमनीयकम् ॥ १ ॥

इत्यत्र सुधापाठं कुर्व्वतः सुधाशब्दस्यामृतवाचकत्वात्, "पयः कीलालममृतं जीवनं भुवनं वनम्" इत्यमरः । इति अमृतशब्दस्य जलवाचकत्वादिदमाचमनीयमिति वदन्ति ।

अर्घ्यं स्वाहा इति गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्वात्मकमर्घ्यं शिरसि दद्यात् ।

वैष्णवे तु—अर्घ्यादिक्रमेण देयमिति वदन्ति । जातीलवङ्गकक्कोलाक्मकमाचमनीयं वदने दद्यात् ।

तथाच—

मधुपर्कं ततो दद्याज्जलमन्त्रेण देशिकः ।

इतिवचनात् । न च मधुपर्कमात्रविषयमिदम् ;

सुधानुनाततः कुर्य्यान्मधुपर्कं मुखाम्बुजे ।
तेनैवमनुना कुर्य्याद‌द्भिराचमनीयकम् ॥ इति वचनात् ।

तथा—वारुणेन च मंत्रेण दद्यादाचमनीयकम् । एतद्वचनं शूद्रविषयिकमिति केचित् ।

वस्तुतस्तु इच्छाविकल्पः । मैथिलास्तु स्वधा पाठं कुर्वन्ति । न सुधेति वकारस्य त्यागबोधकत्वात् ।

किञ्चित् त्यागात्मकस्वाहाशब्देनार्घ्यदानात् तत् समभिव्याहृताचमनीयदानेऽपि त्यागार्थबोधकत्वेन स्वधामन्त्रो युज्यते न तु वमिति । तथाच "नमः स्वाहास्वधावषट्वोषड्" इति यथाक्रमाभिधानात् जलमंत्रेणेति वचनं प्रमाणशून्यमितितान्त्रिकाः । तेनाचमनीयं स्वधेति ।

तथा—

स्वधेत्याचमनीयं च त्रिवारं मुखपङ्कजे ।
स्वधेतिमधुपर्कं च पुनराचमनीयकम् ॥ १ ॥

इतिसामशम्भुधृतवचनात् ।

एके पुनः 'जलमन्त्रेण देशिकः' "वारुणेन च बीजेन" इत्यत्र सहार्थां तृतीयां वदन्त इदमाचमनीयकम् अमुकदेवतायै स्वधेति मन्यन्ते । ततो मधुपर्कः स्वधा ।

आज्यं दधिमधूमिश्रं मधुपर्कं विदुर्बुधाः ।

एवं पुनराचमनीयं स्वाहेति । ततः स्नानीयं निवेदयामि । ततो वस्त्रयज्ञोपवीतानि दद्यात् । तत आभरणं नमः एष गंधो नमः । स च—

गंधश्चंदनकर्पूरकालागरुभिरीरितः ॥

ततो मंत्रपुटितमातृकावर्णेन तत्तन्न्यासस्थाने पूजयित्वा एतानि पुष्पाणि वौषट् ।

तत आवरणपूजा ॥ सर्वत्र दाने मूलमंत्रोच्चारणम् ॥ ततो गुग्गुल्वगरुशीरशर्कराचंदनघृतात्मकं धूपं दद्यात् । तथाच—

स गुग्गुल्वगरूशीरशर्करामधुचन्दनैः ।
धूपयेदाज्यसंमिश्रैर्नाचैर्देवस्य देशिकः ॥ १ ॥

विशेषस्तु तत्रैव—

सिताज्यमधुसंमिश्रं गुग्गुल्वगरुचन्दनम् ।
षडङ्गं धूपयेत्तत्तु सर्वदेवमयं सदा ॥ १ ॥

तथा तन्त्रराजे—

रोगरोगहररोगदवशान् सुरतरुजतुलघुपत्रविशेषाः ।
वक्रविवर्जितवारिजमुद्रा धूपवतिरिह सुंदरिभद्रा ॥ १ ॥

गुग्गुलं सरलं दारुमन्त्रं मलयसंभवम् ।
ह्रीवेरमगुरुं कुष्टं गुडं सर्जरसंघनम् ॥ १ ॥
हरीतकीनवनखी लाक्षां ( जटा ) मांसीं च शैलजम् ।
षोडशाङ्गं विदुर्धूपं दैवे पैत्रे च कर्म्मणि ॥ २ ॥
मधुमुक्तं घृतं गंधो गुग्गुल्वगुरुशैलजम् ।
चन्दनं सिल्हसिद्धार्थं दशांगो धूप उच्यते ॥ ३ ॥

ततः कर्पूरगर्भिण्या वर्तिकया दीपं दद्यात् । तथाच—

वर्त्या कर्पूरगर्भिण्या सर्प्पिषा तिलजेन वा ।
आरोप्य दर्शयेद्दीपानुच्चैः सौरभशालिनः ॥ १ ॥

इति शारदायाम् ।

गौतमीये विशेषस्तु—

तत्र तत्र जलं दद्यात् उपचारान्तेऽन्तरा ।

ततो नैवेद्यादीनि दद्यात् । गंधादिविशेषस्तु तंत्रान्तरे—

मध्यमानामिकाङ्गुष्ठैरंगुल्यग्रेण पार्वति ! ।
दद्याच्च विमलं गन्धं मूलमंत्रेण साधकः ॥ १ ॥
अंगुष्ठतर्ज्जनीभ्यां तु चक्रे पुष्पं निवेदयेत् ।
यथा गंधं तथा देवि ! धूपं दद्याद्विचक्षणः ॥ २ ॥
मध्यमानामिकाभ्यां तु मध्यपर्वणि देशिकः ।
अङ्गुल्यग्रेण देवेशि ! धृत्वा धूपं निवेदयेत् ॥ ३ ॥
उत्तोलनं त्रिधा कृत्वा गायत्र्यामूलयोगतः ।
तत्वाख्यमुद्रया देवि ! नैवेद्यं तु निवेदयेत् ॥
मूलेनाचमनं दद्यात्ताम्बूलं तेन मुद्रया ॥ ४ ॥

तथा सौरागमे—

ततः समर्प्पयेद्धूपं घंटावाद्यजयस्वनैः ॥ १ ॥

तन्त्रातरे—

धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य हृदानुना ।
अस्त्रेण पूजितां घंटां वादयन् गुग्गुलं दहेत् ॥ १ ॥

तथा—

जयध्वनिततो मंत्र मातस्वाहेत्युदीर्य्य च ।
अभ्यर्च्य वादयेद्‌घण्टां सुधूपैर्धूपयेत्ततः ॥ २ ॥

तन्त्रे—

न भूमौ वितरेद्धूपं नासने न घटे तथा ।

तथाच गौतमीये—

उत्ताय्र्य दृष्टिपर्य्यन्तं घंटां वामदिशि थिताम् ।
वादयन् वामहस्तेन दक्षहस्तेन चार्प्पयेत् ॥ १ ॥

एवं दीपदानेऽपि घंटावादनम् ।

यामले—

निवेदयेत् पुरोभागे गंधपुष्पं च भूषणम् ।
दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः ॥ १
वामनस्तु तथा धूपमग्रे वा न तु दक्षिणे ।
नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः ॥ २ ॥

वामदक्षिणभागस्तु देवताया एवः न तु साधकस्य ।

धूपदीपौ सुभोज्यं च देवताग्रे निवेदयेत् ।

इतिदर्शनात् ।

घृतयुक्तं दक्षिणे तु तैलयुक्तं च वामतः ।

एवं सितावर्तिश्चेद्दक्षिणे; रक्तावर्तिश्चेद्वामे; संमुखे तु न नियमः ।

पक्वं च देवतावामे आमान्नं चैव दक्षिणे ।

इति तु सांप्रदायिकाः । तथा च यामले—

दीपं घृतयुतं दक्षे तैलयुक्तं च वामतः ।

दक्षिणे च सितावर्तिं वामतो रक्तवर्तिकम् ॥ १ ॥

पक्वापक्वविभेदेन नैवेद्येष्विति च स्थितिः ।

पुरतो नियमो नास्ति दीपनैवेद्ययोः क्वचित् ॥ २ ॥

ततोऽष्टोत्तरशतं सहस्रं वा शतं वा संजप्य ॐ गुह्यातीत्यादिना जपं समर्पयेत् । अस्य मंत्रस्य दशसंस्कारान् पूर्वोक्तप्रकारेण कृत्वा गुरुः शिष्यमानीय वौषडिति मंत्रेण शिष्यनेत्रं वस्त्रेणाछाद्य शिष्याञ्जलिं पुष्पैः पूरयित्वा गुरुः स्वयमेव मंत्रमुच्चरन् कलशे देवताप्रीत्यै क्षेपयेत् । ततो नेत्रबन्धं दूरीकृत्य दर्भास्तरण आसीनं शिष्यं आत्मयागक्रमात् भूतशुद्ध्यादिकं विधाय तत्तन्मंत्रोक्तन्यासान् शिष्यस्य देहे कुर्य्यात् । कुंभस्थां देवतां पुनः पंचोपचारैः संपूज्यालंकृतं शिष्यमन्यस्मिन्नुपवेशयेत् । ततो मंगलाचारपूर्वकं तत् कुंभं समुद्धृत्य तन्मुखस्थान् सुरद्रुमरूपान् पल्लवान् शिष्यस्य शिरसि निधाय मातृकां मनसा जपन् मूलेन साधितैस्तोयैर्वशिष्ठसंहितोक्ताभिषेकमंत्रैस्तमभिसेचयेत् । शिष्योऽवशिष्टजलेनाचम्य वाससी परिधाय गुरोः सन्निधावुपविशेत । तामेव गुरुरात्मनोदेवतां शिष्यसंक्रांतां तयोरैक्यं संभावयन् गंधादिभिः पूजयेत् ।

ॐसहस्रारं हुंफडितिमंत्रेण शिष्यस्य शिखां बद्ध्वा संरक्ष्य कलान्यासं कुर्य्यात् ।

तद्यथा—कुशत्रयेण पादतलाज्जानुपर्य्यंतम् ॐनिवृत्त्यैनमः । जानुनोर्नाभिपर्य्यन्तं ॐप्रतिष्ठायै नमः । नाभेराकंठं ॐविद्यायै नमः । कंठादाललाटं । ॐशान्त्यै नमः। ललाटादाब्रह्मरन्ध्रांतं ॐशान्त्यतीतायै नमः। पुनर्ब्रह्मरंध्रादाललाटं ॐशांत्यतीतायै नमः । ललाटादाकंठं ॐशांत्यै नमः । कंठान्नाभिपर्य्यन्तं ॐविद्यायै नमः । नाभेर्जानुपर्य्यन्तंॐप्रतीष्ठायै नमः । जानुतः पादपर्य्यंतं ॐनिवृत्त्यै नमः। ततः शिरसि हस्तं दत्वा अष्टोत्तरशतं जप्त्वा अमुकमंत्रं तेऽहं ददामीति शिष्यहस्ते जलं दद्यात् । तथा वासिष्ठे—

ततस्तच्छिरसि स्वस्य हस्तं दत्वा शतं जपेत् ।

अष्टोतरं ततो मंत्रं दद्यादुदकपूर्वकम् ।

आवयोस्तुल्यफलदा भवत्वेवमुदीरयेत् ॥ ३ ॥

ततो ददस्वेति शिष्यो ब्रूयात्। तत ऋष्यादिसंयुक्तं मंत्रं गुरुः शिदक्षिणकर्णं त्रिःश्रावयेत्। तथाच गौतमीये—

न्यासजातं तस्य देहे गुरुः शिष्यस्य यत्नतः।
दक्षकर्णे वदेन्मन्त्रं त्रिवारं पूर्णमानसः॥ १॥

दक्षेतिद्विजातिविषयम्। तथाच तन्त्रे—

दक्षकर्णे त्रिशोविद्यामेकाच्चारेण चोच्चरेत्।
एष विधिर्द्विजातीनां स्त्रीशूद्राणां च वामतः॥ १॥

रुद्रयामले—

गुरुस्तु प्राङ्मुखो भूत्वा शिष्यं प्रत्यङ्मुखस्थितम्।
त्रिवारं दक्षिणे कर्णे वामे चैवं तथासकृत्॥
विपरीतमतो ज्ञेयं स्त्रीशूद्राणां च वामतः॥ १॥

इति विश्वसारे।

दक्षकर्णे वदेन्मंत्रं ऋष्यादिकसमन्वितम्।
तथा तस्मिन्क्षणे देवि! जपेन्मंत्रं शताष्टकम्॥ १॥

शारदायाम्—

गुरोर्लब्धपुनर्विद्यामष्टकृत्वो जपेत्सुधीः।
गुरुमंत्रदेवतानामैक्यं संभावयन् धिया॥ १॥

एतद्वचनं तु तत्तद्भावनापरजपविषयम्। ततो गुरुचरणे पतित एव तिष्ठेत्। ततो गुरुः—

उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान् भव।
कीर्तिः श्रीकान्तिदीर्घायुर्बलारोग्यं सदास्तु ते॥ १॥

इत्युत्थापयेत्। ततः शिष्यः कुशतिलजलान्यादाय—

ॐअद्यकृतैतत् अमुकमंत्रग्रहणप्रतिष्ठार्थं दक्षिणामिदं सुवर्णं काञ्चनं वा वह्निदैवतम् अमुकगोत्रायाऽमुकदेवशर्म्मणे गुरवे तुभ्यमहं संप्रददे। शरीरमर्थं प्राणांश्च सर्वं तस्मै निवेदयेत्।

ततः प्रभृतिकुर्वीत गुरोः प्रियमनन्यधीः।
यद्यदिष्टतमं लोके गुरवे तन्निवेदयेत्॥ १॥

स्वतन्त्रतंत्रे दक्षिणा नियमो यथा—

गुरवे दक्षिणां दद्यात् प्रत्यक्षाय शिवात्मने।
सर्वस्वं वा तदर्द्धं वा तदर्द्धं वा तदाज्ञया॥
नचेत्संचारिणी शक्तिः कथमस्य भविष्यति॥ २॥

तथा कुलामृते—

वित्तशाठ्यं निहन्त्याशु पुत्रानायुर्यशोधनम्।

गुरुदेवं वञ्चयित्वा यः कुर्य्याद्धनसंचयम् ॥
तेन तद्भुज्यते नैव ह्रीयते राजतस्करैः ॥ ३ ॥

अन्यत्र—सर्वस्वं दक्षिणां दद्यात् गांश्च दद्यात्पयस्विनीम् ।
भूमिं वृत्तिकरीं दद्यात् पुत्रपात्रानुगामिनीम् ॥ १ ॥
गुरवे दक्षिणां दद्यात्स्वर्णवस्त्रसमन्विताम् ।
गुरुसंतोषमात्रेण दुष्टमंत्रोऽपि सिद्ध्यति ॥ २ ॥
अन्यथा नैव सिद्धिः स्यादभिचाराय कल्पते ।
दीक्षाग्रहणसामग्रीं गुरवे ऽथ निवेदयेत् ॥
अन्यांश्च ब्राह्मणांस्तत्र यत्नतः परितोषयेत् ॥ ३ ॥

तन्त्रान्तरे—शतं जपेतुदग्रस्थो निकटे त्रिदिनं वसेत् ।
नोचेत्संचारिणीशक्तिर्गुरुमेति न संशयः ॥ १ ॥

विश्वसारे—अष्टाधिकसहस्रं वै शतं वापि विधानतः ।
स्वशक्तिरक्षणार्थाय गुरुमन्त्रं तदा जपेत् ॥ १ ॥

तथाच—दत्वा मंत्रं जपेद्देवि ! शतमष्टोत्तरं ततः ॥ इति ।

ततो मिष्टान्नपानादितो ब्राह्मणान् परितोष्य स्वयं भुंजीत ।

दीक्षादिवसे गुरुशिष्ययोरुपवासे दोषमाह योगिनीतंत्रे—
मन्त्रं दत्वा गुरुश्चैव उपवासं यदाचरेत् ।
महान्धकारनरके क्रिमिर्भवति नान्यथा ॥ १ ॥
दीक्षाकृत्वा यदा मंत्री उपवासं समाचरेत् ।
तस्य देवः सदा रुष्टः शापं दत्वा व्रजेत्पुरम् ॥ २ ॥

यद्यत्र होमः क्रियते तदा तद्विधानं वक्ष्यामः ।

इति कलवतीदीक्षा ।

---

## अथ पञ्चायतनीदीक्षा ।

तत्र यामले—भवानीन्तु यदा मध्ये ऐशान्यामच्युतं यजेत् ।
आग्नेय्यां पार्वतीनाथं नैर्ऋत्यां गणनायकम् ॥ १ ॥
वायव्यां तपनं चैव पूजाक्रम उदाहृतः ।
यदा मध्ये तु गोविन्दमैशान्यां शंकरं यजेत् ॥ २ ॥
आग्नेय्यां गणनाथं च नैर्ऋत्यां तपनं तथा ।
वायव्यामम्बिकां चैव भोगमोक्षैकभूमिकाम् ॥ ३ ॥
शङ्करं तु यदा मध्ये ऐशान्यामच्युतं यजेत् ।
आग्नेय्यां तपनं चैव नैर्ऋत्यां गणनायकम् ॥ ४ ॥
वायव्यां पार्वतीं चैव भोगमोक्षप्रदायिनी ।
आदित्यं च यदा मध्ये ऐशान्यां शङ्करं यजेत् ॥ ५ ॥

आग्नेय्यां गणनाथं च नैर्ऋत्यां केशवं यजेत् ।
वायव्यामम्बिकां देवि ! स्वर्गसाधनभूमिकाम् ॥ ६ ॥
गणनाथं यदा मध्ये ऐशान्यां केशवं यजेत् ।
आग्नेय्यामीश्वरं चैव नैर्ऋत्यां तपनं तथा ॥ ७ ॥
वायव्यां पार्वतीं चैव पूजयेन्मोक्षसाधिनीम् ।
स्वस्थानवर्जिता देवा दुःखशोकभयप्रदाः ॥ ८ ॥

तथा च गणेशविमर्षिण्याम्—

शंभौ मध्यगते हरीनहरभूदेव्या हरौ शंकरे-
भास्येनागसुता रवौ हरगणेशाजाम्बिकास्थापिता ।
देव्यां विष्णुहरैकदंतरवयो लम्बोदरेचेश्वरे-
नार्य्यां शंकरभागतो ऽतिसुखदाव्यक्तास्तु ते हानिदाः ॥१॥

रामार्चनचन्द्रिकायां गौतमीये च-यदाङ्गदेवतायाः पूजने विशेष उक्तः।
तथा—देवताग्रे स्वस्य चाग्रे प्राची प्रोक्ता मनीषिभिः ।
तस्याग्नेये गणेशानं सूर्य्यनैर्ऋत्यकोणके ॥ १ ॥
वायव्ये चाम्बिकामीशमीशाने हरिपूजने ।
तथा पंचात्मिकायां च गणेशादिकमायजेत् ॥ २ ॥
यदा तु मध्ये गोविन्दमाग्नेय्यां गणनायकम् ।
नैर्ऋत्या हं समभ्यर्च्य वायव्यामर्च्चयेच्छिवाम् ॥
ऐशान्यां शंकरं चैव भागमोक्षफलाप्तये ॥ ३ ॥

इति यदङ्गदेवतायाः पूजने गणेशादिपूजनमुक्तं; तद्रामगोपालविषय-मितिकेचित् ।

वस्तुतो वैकल्प्यमिति संप्रदायः । एतेषां पूजनं तु गौतमीये—
गन्धादिभिरथाभ्यर्च्य षडङ्गार्चनमेव च ।
विंशकृत्वो जपेन्मन्त्रं नमस्कृत्य समापयेत् ॥ १ ॥

अङ्गदेवतापूजाकालस्तु पीठपूजानन्तरम् । तथाच सनत्कुमारतन्त्रे—
पीठस्यार्चनमङ्गदेवयजनं प्राणप्रतिष्ठा तथा
आहूतं निजमुद्रिकाविरचनं ध्यानं प्रभोःपूजनम् ॥ इति ।

यत्तु देवे पुष्पाञ्जलिं दत्वा अङ्गदेवान् समर्चयेत्, तत्तु प्रतिष्ठितय-न्त्रादिविषयम् । यन्त्रातिरिक्ताधारपूजनं तु कुलावल्याम्—
एकपीठे पृथक्पूजां विना यन्त्रं करोति यः ।
अङ्गाङ्गित्वं परित्यज्य देवताशापमाप्नुयात् ॥ २ ॥
एवञ्च—आवाह्य देवतामन्यामर्च्चयंस्त्वन्यदेवताम् ।
उभाभ्यां लभते शापं मन्त्री तु वलदुर्म्मतिः ॥ १ ॥

तदेतदतिरिक्तविषयम् । सर्वेषामङ्गमन्त्राणां सिद्धादिविचारो नास्ति ।
तथाच—सिद्धादिशोधनं नैषामङ्गत्वे सति राजवत् ।
श्यामादौ तु पञ्चायतनाभावः । तथाच रुद्रयामले—
श्यामायां भैरवीतावच्छिन्नमस्तरास्तुभैरवे ।
मंजुघोषे तथारौद्रे पञ्चाङ्गं नेष्यते बुधैः ॥ १ ॥
उपविद्यासु सर्व्वासु षट्कर्म्मादिषु साधने ।
नात्र दीक्षाद्यपेक्षास्ति नात्राङ्गादिप्रपूजनम् ॥ २ ॥
तत्त्वसारे—उपविद्यासु सर्वासु तथा योगप्रसाधने ।
दीक्षां वीनैव कर्त्तव्यमुपदेशं सदैव हि ॥ १ ॥

## अथ संक्षेपदीक्षा ।

मुहूर्ते सर्वतोभद्रे नवकुंभं निधाय च ।
सोदकं गन्धपुष्पाभ्यामर्च्चितं वस्त्रसंयुतम् ॥ १ ॥
सर्वौषधीनवरत्नं पञ्चपल्लवसंयुतम् ।
तता देवार्च्चनं कृत्वा हुनेदष्टोत्तरं शतम् ॥ २ ॥
पञ्चपल्लवमिति—पणसाम्राऽश्वत्थवटवकुलानि ।
तथाच वासिष्ठे—पणसाम्रं तथाऽश्वत्थं वटं बकुलमेव च ।
पञ्चपल्लवमित्युक्तं मुनिभिस्तन्त्रवेदिभिः ॥ १ ।
नवरत्नम्—मुक्तामाणिक्यवैडूर्य्यगोमेदा वज्रविद्रुमौ ।
पद्मरागं मरकतं नीलं चेति यथाक्रमात् ॥ १ ॥
निबन्धे—शिष्यं स्वलंकृतं वेद्यामुपाग्निमुपवेशयेत् ।
मन्त्रितं प्रोक्षणीतोयैः शांतिकुम्भजलैस्तथा ॥ १ ॥
मूलमन्त्रेणाष्टोत्तरशतैर्मन्त्रितैरभिषेचयेत् अष्टोत्तरशतेतरशतैः ।
अथ संपादयेन्मन्त्रं हस्तं शिरसि धारयेत् ।
समोऽस्तीत्यक्षतान्दद्यात्ततः शिष्योऽर्चयेद्गुरुम् ॥ १ ॥
यद्वा दीक्षान्तरम्—शंखमभ्यर्च्य साक्षतं तदम्बुनाभिषिश्च्याष्टवारं मूलेन शिरसि करं निधाय अष्टौ वारान् कर्णे जपेत् ।
तथाच—तत्राप्यशक्तः कश्चिच्चेदब्जमभ्यर्च्य साक्षतम् ।
तदम्बुनाभिषिञ्चाष्टवारं मूलेन मस्तके ॥
निधायाष्टौ जपेत्कर्णे उपदेशे त्वयंविधिः ॥ १ ॥
इति संक्षेपदीक्षा ॥

उपदेशान्तरमाह विश्वसारे—
चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥ १ ॥

महादीक्षा तथा दीक्षोपदेशस्तदनन्तरम् ।
युगे युगे च कर्तव्य उपदेशः कलौ युगे ॥ २ ॥

अथ सर्वतोभद्रमण्डलं शारदायाम्—

चतुरस्रे चतुःकोष्ठे कर्णसूत्रसमन्विते ।
चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम् ॥ १ ॥
मध्ये मध्ये यथा मत्स्या भवेयुः पातयेत्तथा ।
पूर्वापरायते द्वे द्वे मन्त्री याम्योत्तरायणे ॥ २ ॥
पातयेत्तेषु मत्स्येषु समं सूत्रचतुष्टयम् ।
पूर्ववत् कोणकोष्ठेषु कर्णसूत्राणि पातयेत् ॥ ३ ॥
तदुद्भूतेषु मत्स्येषु दद्यात्सूत्रचतुष्टयम् ।
ततः कोष्ठेषु मत्स्याः स्युस्तेषु सूत्राणि पातयेत् ॥ ४ ॥
यावच्छतद्वयं मन्त्री षट्पंचाशत्पदान्यपि ।
तावतेनैव विधिना तत्र सूत्राणि पातयेत् ॥ ५ ॥

दैर्घ्यविस्तारयोः षोडषकोष्ठे कृते तद्भविष्यति । तत्र कर्णसूत्रपातनं कोष्ठानां तुल्यपरिमानार्थमिति बोद्धव्यम् ।

षट्त्रिंशतापदैर्मध्यं लिखेत्पद्मं सलक्षणम् ।
बहिः पंक्त्या लिखेत्पीठं पंक्तियुग्मेन वीथिका ॥ ६ ॥
द्वारशोभोपशोभास्रान् शिष्टाभ्यां परिकल्पयेत् ।
शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत् ॥ ७ ॥
पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः ।
तन्मध्यं विभजेद्वृत्तैस्त्रिभिः समविभागतः ॥ ८ ॥
आद्यं स्यात्कर्णिकास्थानं केशराणां द्वितीयकम् ।
तृतीयं पद्मपत्राणां मुक्तांशेन दलाग्रहम् ॥ ६ ॥
बाह्यवृत्तान्तरालस्य मानेन विधिना सुधीः ।
विधायके शराग्रेषु परितोऽर्द्धनिशाकरान् ॥ १० ॥
लिखित्वा संधिसंस्थानि तत्र सूत्राणि पातयेत् ।
दलाग्राणां च यन्मानं तन्मानाद्वृत्तमालिखेत् ॥ ११
तदन्तराले तन्मध्ये सूत्रस्योभयतः सुधीः ।
आलिखेद्बाह्यहस्तेन दलाग्राणि समन्ततः ॥ १२ ॥
दलमूलेषु युगशः केशराणि प्रकल्पयेत् ।
एतत्साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः ॥ १३ ॥
पदानि त्रीणि पादार्थं पीठकोणेषु मार्ज्जयेत् ।
अवशिष्टैः पदैर्विद्वान् पीठगात्राणि कल्पयेत् ॥

पदानि वीथिसंस्थानि मार्ज्जयेत् पंक्त्यभेदतः ।
दिक्षु द्वाराणि रचयेत् द्विचतुःकोष्ठकैस्ततः ॥ १५ ॥
पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः ।
उपशोभाःस्युरेकेन त्रिभिः कोष्ठैरनन्तरम् ॥ १६ ॥
अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम् ।
रञ्जयेत्पञ्चभिर्वर्णैर्मण्डलं तन्मनोहरम् ॥ १७ ॥

बृहन्मत्स्यसूक्तम्—

पङ्कजं शुक्लवर्णेन वैष्णवे यागकर्माणि ।
शक्तियागे तु रक्तं स्याच्छैवे पीतं विनिर्दिशेत् ॥
प्रतिष्ठासु च सर्वासु शुक्लमेव विनिर्दिशेत् ॥ १ ॥
पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम् ।
कुसुभं चूर्णमरुणं कृष्णं दग्धपुलाकजम् ॥
बिल्वादिपत्रजं श्याममित्युक्तं वर्णपञ्चकम् ॥ २ ॥
अङ्गुलोत्सेधविस्ताराः सीमारेखाः सिताः शुभाः ।
कर्णिकां पीतवर्णेन केशराण्यरुणेन च ॥ ३ ॥
शुक्लावर्णानि पत्राणि तत्संधीन् श्यामलेन च ।
रजसा रञ्जयेन्मन्त्री यद्वापीतैव कर्णिका ॥ ४ ॥
केशराः पीतरक्ताःस्युररुणानि दलान्यपि ।
संधयः कृष्णवर्णाः स्युः सितेनाप्यसितेन वा ॥ ५ ॥
रञ्जयेत् पीठगर्भाणि पादाः स्युररुणप्रभाः ।
गात्राणि तस्य शुक्लानि वीथिषु चतसृष्वपि ॥ ६ ॥
आलिखेत्कल्पलतिका फलपुष्पदलान्विता ।
वर्णैर्नानाविधैश्चित्राः सर्वदृष्टिमनोहराः ।
द्वाराणि श्वेतवर्णानि शोभारक्ताः समीरिताः ॥ ७ ॥
उपशोभाःपीतवर्णाः कोणान्यसितमानि च ।
तिस्रो रेखा बहिः कार्य्या सितरक्ताः सिताः क्रमात् ॥ ८ ॥
मण्डलं सर्वतो भद्रमेतत्साधारणं मतम् ।
चतुरस्रां भुवं भित्वा दिग्भ्यो द्वादशधा सुधीः ॥ ९ ॥
पातयेत्तत्र सूत्राणि कोष्ठानां दृश्यते शतम् ।
चतुःश्चत्वरिंशदाढ्यं पश्चात् षट्त्रिंशतांबुजम् ॥ १० ॥
कोष्ठैः प्रकल्पयेत्पीठं पंक्त्या नैवात्र वीथिकाः ।
द्वारशोभा यथा पूर्वमुपशोभा न दृश्यते ॥ ११ ॥
अवशिष्टैः पदैः कुर्य्यात् षड्भिः कोणानि तन्त्रवित् ।

विदध्यात् पूर्ववच्छेषमेवं वा मण्डलं स्मृतम् ॥ १२ ॥

अथ स्वल्पसर्वतोभद्रः ।

चतुरस्रे चतुःषष्टि पादान्याचरयेत्सुधीः ।
पदैश्चतुर्भिः पद्मं स्यान्मध्ये तत् परितः पुनः ॥ १ ॥
वीथिश्चतस्रः कुर्वीत मण्डलान्तावसानिकाः ।
दिग्गतेषु चतुष्केषु मण्डलानि समालिखेत् ॥ २ ॥
विदिग्गतचतुष्काणि भित्वा षोडशधा सुधीः ।
मार्ज्जयेत्स्वस्तिकाकारं श्वेतपीतारुणासितैः ॥ ३ ॥
रजोभिः पूरयेत्तानि स्वस्तिकानि शिवादितः ।
प्राक्प्रोक्तेनैव मार्गेण शेषमन्यत्समापयेत् ॥ ४ ॥
नव नाममिदं प्रोक्तं मण्डलं सर्वसिद्धिदम् ।
पञ्चाङ्गमंडलं प्रोक्तमेतत्स्वस्तिकवर्ज्जितम् ॥ ५ ॥
दीक्षायै देवपूजायां मण्डलानां चतुष्टयम् ।
सर्वतन्त्रानुसारेण प्रोक्तं सर्वसमृद्धिदम् ॥ ६ ॥

इतिसर्वतोभद्रमण्डलं समाप्तम्—

---

अथ मन्त्राणां हितार्थाय त्रिलोही मुद्रा निरूप्यते ।

सोमसूर्य्याग्निरूपाः स्युर्व्वर्णालोहत्रयं तथा ।
रौप्यमिन्दुः स्मृतो हेमसूर्य्यस्ताम्रो हुताशनः ॥ १ ॥
लोहभागाः समुद्दिष्टाः स्वराद्यक्षरसंख्यया ।
तैर्लोहैः कारयेन्मुद्रामसंकलितसङ्गताम् ॥ २ ॥
एषु स्वराः स्मृताः सौम्याः स्पर्शाः सौराःशुभोदयाः ।
आग्नेया व्यापकाः सर्वे सोमसूर्य्याग्निदेवताः ॥ ३ ॥
स्वराःषोडशविख्याताः स्पर्शास्ते पञ्चविंशतिः ।
व्यापका दश ते कामधनधर्मप्रदायिनः ॥ ४ ॥
सार्द्धं सहस्रं संजप्य स्पृष्ट्वा तां जुहुयात्ततः ।
तस्यां संपातयेन्मन्त्री सर्पिषा पूर्वसंख्यया ॥ ५ ॥
निःक्षिप्य कुम्भे तां मुद्रामभिषेकोक्तवर्त्मना ।
आवाह्य पूजयेद्देवीमुपचारैर्विधानतः ॥ ६ ॥
अभिषिच्य विनीताय दद्यात्तां मुद्रिकां गुरुः ।
इयं मुद्रां क्षुद्ररोगविषज्वरविनाशिनी ॥ ७ ॥
व्यालचौरमृगादिभ्यो रक्षां कुर्याद्विशेषतः ।

युद्धे विजयमाप्नोति धारयेन्मनुजेश्वरः ॥ ८ ॥
मन्त्रसिद्धिकरी पुंसां चतुर्वर्गफलप्रदा ।
वधारयेन्मनुजो नित्यं देवतुल्यो भवेद्भुवि ॥ ९ ॥

क्षुद्रः-शत्रुः । अभिषिञ्चयेति पूर्वोक्तदीक्षापद्धत्युक्तविधिना घटं संस्थाप्य तत्कल्पोक्तदेवतामावाह्य यथोपचारतः संपूज्य साध्यमभिषिच्य तस्मै दद्यादित्यर्थः । ततो गुरवे दक्षिणां दत्वा महानुत्सवं कुर्य्यात् ॥

गोपाङ्गनाकेलिविलासमुग्धं संसारदावानलभङ्गदक्षम् ।
ब्रह्मादिवृन्दारकवन्दिताङ्घ्रिं वन्दे मुकुन्दं जगदेकनाथम् ॥१॥

इति श्रीमहामहोपाध्यायकृष्णानंदवागीशभट्टाचार्यविरचिते तन्त्रसारे प्रथमपरिच्छेदः ॥१॥

---

## अथ सामान्यपूजापद्धतिः ।

तत्र ब्राह्मे मुहूर्ते उत्थाय मुक्तस्वापः शिरसि सहस्रदलकमलावस्थितं श्वेतवर्णं द्विभुजं वराभयकरं श्वेतमाल्यानुलेपनं स्वप्रकाशरूपं स्ववामस्थितस्वरक्तया शक्त्या स्वप्रकाशस्वरूपया सहितं गुरुं विभाव्य मानसोपचारैराराध्य ऐमिति मन्त्रं यथाशक्ति जप्त्वा नमस्कुर्य्यात् ।

यथा—अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ १ ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २ ॥

ततो मूलादिब्रह्मरंध्रांतं मूलविद्यां विभावयेत् ॥
उद्यद्दिनकरोद्योत यावच्छ्वासं दृढासनः ।
अशेषाशुभशान्त्यर्थं समाहितमनाः शिवम् ॥
तत्प्रभापटलव्याप्तं शरीरमपि चिन्तयेत् ॥ १ ॥

भावप्रदीपे—ब्राह्मे मुहूर्ते चोत्थाय कृतमूत्रादिकः शुचिः ।
मृदुकोमलमासीनो मन्त्रसिद्धिपरः सदा ॥ १ ॥
षडङ्गं न्यासमाचर्य प्राणायामत्रयं तथा ।
योनिमुद्रां विधायाथ मूलाधारे तु चिन्तयेत् ॥ २ ॥
शक्तिं कुण्डलिनीं सूक्ष्मां जगच्चैतन्यरूपिणीम् ।
प्रसुप्तभुजगाकारां सार्धत्रिवलयान्विताम् ॥ ३ ॥
वायुनाग्निं समुत्थाप्य भारतीं बोधयेत्ततः ।
ब्रह्मरन्ध्रपथेनैव परब्रह्मणि योजयेत् ॥ ४ ॥
षट्चक्रभेदनेनैव परब्रह्ममयं पुनः ।

एवं कृत्वागतैरेव संप्लाव्याधारमानयेत् ॥ ५ ॥
एतादिशो विधायाथ देवीं हृत्कमले न्यसेत् ।
सम्पूज्य मानसैर्द्रव्यैर्धार्या कल्पानुसारतः ॥
अष्टोत्तरशतं विद्वान् जपेद्वर्णात्ममालया ॥ ६ ॥

प्रातःकृत्यानन्तरं वा मूत्रादिकं कुर्यात् ।

तथाच—नमस्कृत्य समुत्थाय बहिरागत्य देशिकः ।
ततो मन्त्रादिकं कृत्वा कुर्याद्दन्तविशोधनम् ॥ १ ॥

तस्य नित्यतामाह गौतमीये—
इदानीं पूर्वकृत्यं च प्रसंगात्कथयामि ते ।
यत्कृत्वा कारितां याति मन्त्रमन्त्रार्च्चनादिषु ।
येन विना न सिद्धिः स्यान्नरकं च प्रपद्यते ॥ १ ॥

यामले—प्रातःकृत्यमकृत्वा तु यो देवीं भक्तितो यजेत् ।
निष्फला तस्य पूजा स्याच्छौचहीना यथा क्रिया ॥ १ ॥

लक्ष्मीकुलार्णवे—
सन्ध्यया तु विहिनो यो न दीक्षाफलमाप्नुयात् ।

इति वचनात्तस्यावश्यकत्वम् । वैदिकसंध्यानन्तरं तान्त्रिकसंध्या-कर्तव्या ।

तदुक्तम्—वैदिकीं तान्त्रिकीं सन्ध्यां यथानुक्रमयोगतः । इति ॥

---

## अथ संध्याप्रयोगः ।

तत्र शक्तिविषये—ॐ आत्मतत्वाय स्वाहा । ॐ विद्यातत्वाय स्वाहा । ॐ शिवतत्वाय स्वाहा । इत्याचामेत् । अन्यत्राचमनमात्रम् । तथा च शाक्ताचमनं स्वतन्त्रतन्त्रे—

आत्मविद्याशिवैस्तत्वैराचामेत्साधकाग्रणीः ।
वह्निजायामुखे दत्वा शुद्धेन पयसा प्रिये ! ॥

मालिनीतन्त्रे—आचामेदात्मतत्वाद्यैः प्राणपादैर्द्रढांतकैः ।
मन्त्रैस्त्रिधा तथा वक्रं नासाक्षिश्रोत्रनाभिहृत् ॥
मस्तकाग्रान्स्पृशन्मन्त्री कार्यं श्रोत्रादिवन्दनम् ॥ १ ॥

ततो जले गङ्गेचेत्यादिना तीर्थमावाह्य मूलेन कुशेन त्रिवारं भूमौ जलं क्षिपेत् । तज्जलेन सप्तधा मूलेन मूर्द्धानमभिषेचयेत् । ततः षडङ्गन्यासं कृत्वा वामहस्ते जलं निधाय दक्षिणहस्ते जलमाच्छाद्य हं यं वं लं रं इतित्रिवारमभिमंत्र्य मूलमुच्चरन् गलितोदकबिन्दुस्तत्वमुद्रया मूर्द्धनि सप्तधाभ्युक्षणं कृत्वाशेषं जलं दक्षिणहस्ते समादाय तेजोरूपं ध्यात्वा वा-मनासापुटेनेडया तज्जलं कृष्णदेहान्तःपापं प्रक्षाल्य कृष्णवर्णं तज्जलं

पापरूपं ध्यात्वा पिंगलया विरेच्य पुरः कल्पितवज्रशिलायां फडिति-मन्त्रेण पापपुरुषरूपं तज्जलं क्षिपेत् ॥

इत्यघमर्षणम् ।

---

तथाच गौतमीये—

आचम्य विधिवन्मन्त्री शुचौ देशे च संविशेत् ।
जले संयोज्य तीर्थानि त्रिवारं मूलमन्त्रतः ॥
क्षिपेद्भूमौ कुशाग्रेण सप्तधा मूर्ध्निसेचयेत् ॥ १ ॥

तन्त्रान्तरे—पुनराचम्य विन्यस्य षडङ्गमपि मन्त्रावत् ।
वामहस्ते जलं गृह्य गलितोदकबिन्दुभिः ॥ १ ॥
सप्तधाभ्युक्षणं कृत्वा मूर्द्धिमन्त्रं समुच्चरन् ।
अवशिष्टोदकं हस्ते दक्षे संगृह्य बुद्धिमान् ॥ २ ॥
इडया कृष्णदेहान्तःक्षालितं पापसंचयम् ।
कृष्णवर्णं तुदुदकं दक्षनाडया विरेचयेत् ॥ ३ ॥
दक्षहस्ते जलं मन्त्री पापरूपं विचिन्त्य च ।
पुरतो वज्रपाषाणे निःक्षितेदस्त्रमुच्चरन् ॥ ४ ॥

अन्यत्रापि—षडङ्गन्यासमाचर्य्य वामहस्ते जलं ततः ।
गृहीत्वा दक्षिणेनैव संपुटं कारयेद्बुधः ॥ १ ॥
शिववायुजलं पृथ्वीवन्हिबीजैस्त्रिधा पुनः ।
अभिमन्त्र्य च मूलेन सप्तधा तत्त्वमुद्रया ॥ २ ॥
निःक्षिप्य तज्जलं मूर्ध्नि शेषं दक्षे निधाय च ।
शरीरान्तःस्थितं पापं क्षालयेत्साधकाग्रणीः ॥ ३ ॥

ततो हस्तौ प्रक्षाल्याचम्य ह्रीं हं सः । ॐ "घृणिःसूर्य आदित्य" इति मन्त्रेण सूर्य्यायार्घ्यं दद्यात् ।

तथाच संमोहनतन्त्रे—

शिवबीजं(१) वह्निसस्थं वामनेत्रविभूषितम् ।
बिन्दुनादात्मकं देवि ! हंसपदमथो लिखेत् ॥
अनेन मनुना देवि ! भास्करस्य प्रियेण तु ॥ १ ॥

अर्घ्यं दद्यादिति शेषः । विशेषतस्तु स्नानप्रकरणे बोद्धव्यम् ।

ततः ॐ सूर्य्यमण्डलस्थायै अमुकदेवतायै नम इत्यनेन तत्तद्गायत्र्या त्रिवारं जलं निक्षिप्य तत्तद्गायत्रीं जपेत् । तथाचार्घ्यानन्तरं

---

(१) शिवबीजम्–हकारः, वह्निः–रेफः, वामनेत्रः–ईकारः, नादम्–बिन्दुयुक्त-मित्यर्थः ।

ज्ञानार्णवे—

ततश्च प्रजपेद्धीमान् गायत्रीं परमेश्वरीम् । इति

गायत्री तु स्नानप्रकरणे बोद्धव्या । नन्दिकेश्वरसंहितायाम्—

यावन्न दीयते चार्घ्यं भास्कराय महात्मने ।

तावन्न पूजयेद्विष्णुं शङ्करं वा महेश्वरीम् ॥ १ ॥ इति ।

गौतमीये—एवं ते कथिता मन्त्रसंध्या मन्त्रफलाप्तये ।

न कुर्य्याद्यदि मोहेन न दीक्षाफलमाप्नुयात् ॥ १ ॥

विशुद्धेश्वरतन्त्रे—

सन्ध्याद्वयविधिं कुर्य्याद्ब्राह्मणो विधिपूर्वकम् ।

तन्त्रोक्तविधिना सर्वः शूद्रः सन्ध्यां समाचरेत् ॥ १ ॥

संक्षेपसन्ध्यामथवा कुर्य्यान्मन्त्री ह्यशक्तितः ।

सायं प्रातश्च मध्याह्ने देवं ध्यात्वा मनुं जपेत् ॥

सन्ध्यायां पतितायां तु गायत्रीं दशधा जपेत् ॥ २ ॥

---

## अथ स्नानविधिः ।

तत्र नद्यादौ गत्वा वैदिकस्नानं कृत्वा तान्त्रिकस्नानमाचरेत् । तथाच गौतमीये—

अथ स्नानं ततः कुर्य्यात् यथाशास्त्रविधानतः ।

मलप्रक्षालनं स्नानं स्वशाखोक्तं समाचरेत् ॥

मन्त्रस्नानं ततः कुर्य्यात् कर्म्मणां सिद्धिहेतवे ॥ १ ॥

तद्यथा—ॐअद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुकदेवताप्रीतये स्नानमहं करिष्ये इतिसङ्कल्पं कुर्य्यात् । तथाच कुलचूडामणौ—

ताम्रपात्रं सदूर्वं च सतिलं सजलं ततः ।

गृहीत्वामुकदेवस्य प्रीतये स्नानमाचरेत् ॥ १ ॥

ततः षडङ्गन्यासं प्राणायामं च कृत्वा ।

ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ।

नर्म्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ।

इत्यनेनाङ्कुशमुद्रया सूर्य्यमण्डलात्तीर्थमावाह्य वमिति धेनुमुद्रयाऽमृतीकृत्य कवचेनावगुण्ठ्यास्त्रेण संरक्ष्य मूलेनैकादशधाभिमन्त्र्य सूर्य्याभिमुखं द्वादशधारा निक्षिप्य तस्मिन्निष्टदेवताचरणारविन्दनिसृते जले त्रिर्निर्म्मज्य देवतां ध्यायन् मूलमन्त्रं यथाशक्ति जपन्नुन्मज्य उदकेन त्रिवारजप्तेन कलशमुद्रया त्रिवारमात्मानमभिषिच्य वैदिकसन्ध्यादिकं कृत्वा सूर्य्यार्घ्यं च दत्वा तान्त्रिकाघमर्षणादिद्वारिधारान्तं कर्म कुर्य्यात् ।

तथाच यामले—

ध्यात्वा जलाञ्जलीन् क्षिप्त्वा तर्प्पयेदिष्टदेवताम् ।

ॐ देवांस्तर्प्पयामि । ॐ ऋषींस्तर्प्पयामि । ॐ पितॄंस्तर्पयामीति सन्तर्प्य गुरुं परमगुरुं परात्परगुरुं परमेष्ठिगुरुं च तर्प्पयेत् । तथाच—

देवानृषीन् पितॄंश्चैव तत्कल्पोक्तविधानतः ।
गुरुपत्नीं पुरा तर्प्य तर्पयेदिष्टदेवताम् ॥ १ ॥ इति ।

वैष्णवे तु विशेषः—

नारदं पर्वतं जिष्णुं निशठाद्धवदारुकम् ।
विश्वक्सेनं च शैलेयं गुरुं च तर्प्पयेत्त्रिशः ॥ १ ॥

ॐ नारदं तर्प्पयामीत्यादिक्रमेण प्रयोगः कर्त्तव्यः । ततो मूलमुच्चार्य्य अमुकदेवतां तर्प्पयामि नमः इति विष्णुविषयम् । तथाच गौतमीये—

आदौ मन्त्रं समुच्चार्य श्रीपूर्वं कृष्ण इत्यपि ।
तर्प्पयामि पदं चोक्त्वा नमोऽन्तं तर्प्पयेत्ततः ॥१॥

अन्यत्र मूलमुच्चार्य्य ॐ अमुकदेवतां तर्प्पयामि । तथाच—

तर्प्पयामि पदं योज्यं मन्त्रान्ते स्वेषु नामसु ।
द्वितीयां तेषु चेत्येवं तर्प्पणस्य मनुस्मृतः ॥ १ ॥

शक्तिविषये पुनर्मूलमुच्चार्य्य अमुकदेवीं तर्प्पयामि स्वाहा । होमतर्प्पणयोः स्वाहेति तत्तन्मन्त्रवचनात् । तथाच नीलतन्त्रे—

मन्त्रान्ते नाम चोच्चार्य्य तर्प्पयामि ततः परम् ।
स्वाहान्ते तर्प्पयेद्देवं पञ्चविंशतिसंख्यया ॥१॥ इत्यादि ।

विशुद्धेश्वरे—विद्यां पूर्व्वं समुच्चार्य्य तदन्ते देवताभिधाम् ।
तर्प्पयामीति सम्प्रोक्ता स्वाहांतस्तर्प्पणे मतः ॥ १ ॥
पञ्चविंशतिसंख्या वा दशधा वा त्रिधापि वा ।
मूलमन्त्रं समुच्चार्य्य श्रीकृष्णं तर्प्पयेत्सुधीः ॥ २ ॥

इति गौतमीयात् । पञ्चविंशतिवारं दशधा त्रिधा वा सन्तर्प्पयेत् । तत्र श्रीकृष्णमित्युपलक्षणम् । शक्तिविषये त्रिधा तर्प्पणम् ।

स्नानकर्म्मणि सम्प्राप्ते मूर्ध्नि मन्त्री जलाञ्जलीन् ।
विद्यया वा त्रिशः कुर्य्यात्पूतास्तु त्रिरपः पिबेत् ॥१॥

'तर्प्पणं च त्रिधा भूयस्त्रिधा च प्रोक्षणं तनौ' इति कुलामृतवचनात् । तत आवरणदेवतां प्रत्येकेन सकृत्तर्प्पयेत् । तथाच कुलार्णवे—

एकैकमञ्जलिं तोयं परिवारान्प्रतर्प्पयेत् ।

तत्राशक्तश्चेन्मूलमन्त्रमुच्चार्य्य इष्टदेवतामात्रं तर्प्पयेत् । तथाच—

अशक्तौ मूलमुच्चार्य्य देवीमात्रं प्रतर्प्पयेत् ।

ततो जलादुत्थाय धौते वाससी परिधायाचम्य ह्रीं हंस इदमर्घ्यं सूर्य्याय स्वाहा। तारादौ तु ह्रीं हंसः। मार्तण्डभैरवाय प्रकाशशक्ति-सहिताय इदमर्घ्यं स्वाहा। तन्त्रान्तरे—

सूर्य्यमन्त्रं समुच्चार्य्य मार्तण्डभैरवाय च।
प्रकाशशक्तिसहितायेदमर्घ्यं पठेत्ततः॥
स्वाहान्तं मन्त्रमुच्चार्य्य चार्घ्यं दत्वा जपेन्मनुम्॥ १॥

श्रीविद्यादौ तु ऐँ ह्रीँ श्री हूँ ह्राँ ह्रीँ हूँ स्वाहा सः मार्तण्डभैरवाय प्रकाशशक्तिसहिताय ग्रहराशिनक्षत्रतिथियोगकरणपरिवारसहिताय इदमर्घ्यं स्वाहा इत्यर्घ्यं दत्वा गायत्रीं शतधा दशधा वा जपेत्। तथाच तन्त्रे—

अष्टोत्तरशतावृत्या गायत्रीं प्रजपेत्सुधीः।
महापातकयुक्तोऽपि प्रजपेद्दशधा यदि॥
सत्यं सत्यं महादेवि? मुक्तो भवति तत्क्षणात्॥ १॥

शक्ताशक्तभेदेन गायत्रीजपानन्तरं तर्प्पणं वा। तथाच—

सूर्य्यमण्डलवासिन्यै देवतायै ततः परम्।
अर्घ्यमञ्जलिमादाय गायत्र्या वा त्रिरुत्क्षिपेत्॥ १॥
यथाशक्ति जपेद्देवीं गायत्रीं परमेश्वरीम्।
तर्प्पणार्थं समाचम्य प्राणानायम्य साधकः॥ २॥

गायत्री तु—

ॐ त्रैलोक्यमोहनाय विद्महे स्मराय धीमहि।
तन्नो विष्णुः प्रचोदयात्। इति विष्णुगायत्री।
ॐ नारायणाय विद्महे वासुदेवाय धीमहि।
तन्नो विष्णुःप्रचोदयात्॥ इति नारायणगायत्री।
ॐ वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि।
तन्नो नारसिंहः प्रचोदयात्॥ इति नरसिंहगायत्री।
ॐ वागीश्वराय विद्महे हयग्रीवाय धीमहि।
तन्नो हंसः प्रचोदयात्। इति हयग्रीवगायत्री।
ॐ कृष्णाय विद्महे दामोदराय धीमहि।
तन्नो विष्णुः प्रचोदयात्॥ इति गोपालगायत्री।
ॐ दशरथाय विद्महे सीतावल्लभाय धीमहि।
तन्नो रामः प्रचोदयात्। इति श्रीरामगायत्री।
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि।
तन्नो रुद्रः प्रचोदयात्॥ इति शिवगायत्री।

ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि।
तन्नो दान्तः प्रचोदयात्॥ इति गणेशगायत्री।
ॐ दक्षिणामूर्त्तये विद्महे ध्यानस्थाय धीमहि।
तन्नो धीशः प्रचोदयात्। इति दक्षिणामूर्तिगायत्री।
ॐ आदित्याय विद्महे मार्तण्डाय धीमहि।
तन्नः सूर्य्यः प्रचोदयात्॥ इति सूर्य्यगायत्री।
ॐ कामदेवाय विद्महे पुष्पबाणाय धीमहि।
तन्नोऽनङ्गः प्रचोदयात्॥ इति कामगायत्री।
ॐ सर्वसम्मोहिन्यै विद्महे विश्वजनन्यै धीमहि।
तन्नः शक्तिः प्रचोदयात्॥ इति शक्तिगायत्री।
ॐ त्वरितादेव्यै विद्महे महानित्यायै धीमहि।
तन्नो देवी प्रचोदयात्॥ इति त्वरिता गायत्री।
ॐ ऐं वागेश्वर्य्यै विद्महे क्लीं कामेश्वर्य्यै धीमहि।
सौस्तन्नः शक्तिः प्रचोदयात्॥ इति बालागायत्री।
ॐ ऐं त्रिपुरादेव्यै विद्महे क्लीं कामेश्वर्य्यै धीमहि।
सौस्तन्नः क्लिन्ने प्रचोदयात्॥ इति त्रिपुरसुन्दरीगायत्री।
ॐ त्रिपुरायै विद्महे भैरव्यै धीमहि।
तन्नो देवी प्रचोदयात्। इति भैरवीगायत्री।
ॐ महादेव्यै विद्महे दुर्गायै धीमहि।
तन्नो देवी प्रचोदयात्॥ इति दुर्गागायत्री।
ॐ नारायण्यै विद्महे दुर्गायै धीमहि।
तन्नो गौरी प्रचोदयात्। इति जयदुर्गागायत्री।
ॐ महालक्ष्म्यै विद्महे महाश्रियै धीमहि।
तन्नः श्रीः प्रचोदयात्॥ इति लक्ष्मीगायत्री।
ॐ वाग्देव्यै विद्महे कामराजाय धीमहि।
तन्नो देवी प्रचोदयात्॥ इति सरस्वतीगायत्री।
ॐ नारायण्यै विद्महे भुवनेश्वर्य्यै धीमहि।
तन्नो देवी प्रचोदयात्। इति भुवनेश्वरीगायत्री।
ॐ भगवत्यै विद्महे माहेश्वर्य्यै धीमहि।
तन्नोऽन्नपूर्णा प्रचोदयात्। इति अन्नपूर्णागायत्री।
ॐ महिषमर्दिन्यै विद्महे दुर्गायै धीमहि।
तन्नो देवी प्रचोदयात्॥ इति महिषमर्दिनीगायत्री।
ॐ वैरोचन्यै विद्महे छिन्नमस्तायै धीमहि।

तन्नो देवी प्रचोदयात् ॥ इति छिन्नमस्तागायत्री ।
ॐ कालिकायै विद्महे श्मशानवासिन्यै धीमहि ।
तन्नो घोरा प्रचोदयात् ॥ इति कालिकागायत्री ।
ॐ तारायै विद्महे महोग्रायै धीमहि ।
तन्नो देवी प्रचोदयात् ॥ इति तारागायत्री ।
ॐ गरुडाय विद्महे सुवर्णवर्णाय धीमहि ।
तन्नो गरुडः प्रचोदयात् ॥ इति गरुडगायत्री ।

ध्यानं तु प्रातः—

उद्यदादित्यसंकाशां पुस्तकाक्षकरां स्मरेत् ।
कृष्णाजीनधरां ब्राह्मीं ध्यायेत्ताराङ्किताम्बरे ॥ १ ॥
मध्याह्ने-श्यामवर्णां चतुर्बाहुं शङ्खचक्रलसत्कराम् ।
गदापद्मधरां देवीं सूर्यासनकृताश्रयाम् ॥ १ ॥
सायाह्ने वरदां देवीं गायत्रीं संस्मरेद्यदि ।
शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ॥ २ ॥
त्रिनेत्रां वरदां पाशं शूलं च नृकरोटिकाम् ।
सूर्य्यमण्डलमध्यस्थां ध्यायेद्देवीं समभ्यसेत् ॥ ३ ॥

त्रिपुरादौ ध्यानविशेषो यथा—

प्रातराधारकमले हुतभुङ्मण्डलोपरि ।
वाग्बीजरूपां विद्यां यां विद्युत्पाटलभास्वराम् ॥ १ ॥
पुष्पबाणेक्षुकोदण्डपाशाङ्कुशलसत्कराम् ।
स्वेच्छागृहीतवपुषीं गुरुविद्याक्षरात्मिकाम् ॥ २ ॥
मध्याह्ने हृदयाम्भोजकर्णिके सूर्य्यमण्डले ।
कामबीजात्मकां देवीमलक्तकरसारुणाम् ॥ १ ॥
प्रसूनबाणपुष्पेक्षुचापपाशाङ्कुशान्विताम् ।
परिताः स्वात्ममुख्याभिः षट्त्रिंशत्तत्वशक्तिभिः ॥ २ ॥
सायमाज्ञासरोजस्थे चन्द्रे चन्द्रसमद्युतिम् ।
शक्तिबीजात्मिकां चापबाणपाशांकुशान्विताम् ॥ १ ॥
युगनित्याक्षराकारां स्फटिकावरणान्विताम् ।
चिन्तयित्वा भगवन्तीं नित्याभिः परिवारिताम् ॥ २ ॥

तारादौ तु ह्रीं हंसः इति सूर्य्यायार्घ्यं दत्वा ताम्रादिपात्रे चन्दनार्क-कुसुमापराजितापुष्पाणि निःक्षिप्य उद्यदादित्यमण्डलमध्यवर्तिन्यै नित्यचैतन्योदितायै श्रीमदेकजटायै स्वाहेत्यर्घ्यं दत्वा गायन्त्रीं जपेत् । इति विशेषः ।

तदुक्तं नीलतन्त्रे—

उद्यदादित्यमण्डलवर्तिन्य च समुच्चरेत् ।
नित्यचैतन्योदितायै स्वाहेति च मनुस्मृतः ॥ १ ॥

अन्यत्र कालिकातन्त्रे—

एकजटापदस्थाने कालिकापदयोगतः ॥

ततः सूर्य्यमण्डले देवतां विभाव्य मूलमन्त्रं यथाशक्ति जप्त्वा संहारमुद्रया देवतां स्वहृदयमानीय तीर्थं नमस्कृत्य यागस्थानमाविशेत् ।

इति स्नानविधिः ।

---

ततः सामान्यार्घ्यस्थापनाद्यासनोपवेशपर्य्यन्तं कर्म्मसमाप्य; वामे—ॐ गुरुभ्यो नमः । ॐ परमगुरुभ्यो नमः । परात्परगुरुभ्यो नमः । दक्षिणे—ॐ गणेशाय नमः । मूर्ध्नि मूलमुच्चार्य्यामुकदेवतायै नमः । तथाच गौतमीये—

कृताञ्जलिपुटो भूत्वा वामे गुरुत्रयं यजेत् ।
गुरुं च परमादिं च परात्परगुरुं तथा ॥
दक्षपार्श्वे गणेशं च मूर्ध्नि देवं विभावयेत् ॥ १ ॥

ततः फडितिमन्त्रेण गन्धपुष्पाभ्यां करौ संशोध्य ऊर्द्ध्वोर्द्ध्वतालत्रयं दत्त्वा छोटिकाभिर्द्दशदिग्बन्धनं च कुर्यात् । ततो वमिति जलधारयाग्निप्राकारं विचिन्त्य भूतशुद्धिं कुर्य्यात् । तद्यथा—

अङ्के उत्तानौ हस्तौ कृत्वा सोहमिति जीवात्मानं हृदयस्थं प्रदीपकलिकाकारं मूलाधारावस्थितकुण्डलिन्या सह सुषुम्णावर्त्मना मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यषट्चक्राणि भित्वा शिरोऽवस्थिताधोमुखसहस्रदलकमलकर्णिकान्तर्गतपरमात्मनि तत्संयोज्य तत्रैव पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्शशब्दनासिकाजिह्वाचक्षुस्त्वक्श्रोत्रवाक्पाणिपादपायूपस्थप्रकृतिमनोबुद्ध्यहङ्काररूपचतुर्विंशतितत्त्वानि विलीनानि विभाव्य यमिति वायुबीजं धूम्रवर्णं वामनासापुटे विचिन्त्य तस्य षोडशवारजपेन वायुना देहमापूर्य्य नासापुटौ धृत्वा तस्य चतुःषष्टिवारजपेन कुम्भकं कृत्वा वामकुक्षिस्थकृष्णवर्णं पापपुरुषेण देहं संशोष्य ( पापेन सह देहं दग्ध्वा ) तस्य द्वात्रिंशद्वारजपेन वामनासया वायं रेचयेत् । दक्षिणनासापुटे रमिति वह्निबीजं रक्तवर्णं ध्यात्वा तस्य षोडशवारजपेन वायुना देहमापूर्य्य नासापुटौ धृत्वा षष्टिवारजपेन कुम्भकं कृत्वा पापेन सह देहं दग्ध्वा ठमिति चन्द्रबीजं शुक्लवर्णं वामनासिकायां ध्यात्वा तस्य षोडशवारजपेन ललाटे चन्द्रं नीत्वा नासापुटौ धृत्वा वमिति वरुणबीजस्य चतुःषष्टिवारजपेन तस्माल्ललाटे चन्द्राद्गलि-

तत्सुधया मातृकावर्णात्मिकया समस्तदेहं विरचय्य लमिति पृथ्वीबीजस्य द्वात्रिंशद्वारजपेन देहं सुदृढं विचिन्त्य दक्षिणेन वायुं रचयेत्। मात्रा-संख्यया वा तदुक्तं गौतमीये—

सुषुम्णावर्त्मना सोहमिति मंत्रेण योजयेत्।
सहस्रारे शिवे स्थाने परमात्मनि देशिकः ॥१॥
धूम्रवर्णं ततो वायुबीजं षड्बिन्दुलांछितम्।
पूरयेदिडया वायुं सुधीः षोडशमात्रया॥ २॥
मात्रया च चतुःषष्ठ्या कुम्भयेत्तं सुषुम्णया।
द्वात्रिंशन्मात्रया मन्त्री रेचयेत् पिङ्गलाख्यया॥ ३॥
पूरयेदनया चैव सचिंत्यानिलमारुतम्।
रक्तवर्णं बह्निबीजं तत्र षड्बिन्दुलांछितम्॥ ४॥
तेन पूरकयोगेन मात्रया षोडशाख्यया।
चतुःषष्ठ्या मात्रया च निर्दहेत्कुम्भकेन तु॥ ५॥
वामपार्श्वे स्थितं पापपुरुषं कज्जलप्रभम्।
ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम्॥ ६॥
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम्।
तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्॥ ७॥
उपपातकरोमाणं रक्तश्मश्रुविलोचनम्।
खड्गचर्मधरं क्रुद्धमेनं कुक्षौ विचिन्तयेत्॥ ८॥
मूलाधारोत्थितेनैव वन्हिना निर्दहेच्च तम्।
एवं संदह्य परितो द्वात्रिंशन्मात्रया ततः॥ ९॥
भस्मना सहितं मन्त्री रेचयेद् दिडया पुनः।
वामनाड्या चन्द्रबीजं कुन्देन्दुयुतसप्रभम्॥ १०॥
भालेडुराजे संयोज्य ततः षोडशमात्रया।
सुषुम्णाया चतुःषष्टिमात्रया तोयबीजकैः॥११॥
ध्यात्वामृतमयीं तुष्टिं पंचाशद्वर्णरूपिणीम्।
तया देहं विचिन्त्यैवं मनसा पिङ्गलाध्वना॥१२॥
द्वात्रिंशन्मात्रया मन्त्री लम्बीजेन दृढं नयेत्।
स्वस्थाने हंसमन्त्रेण पुनस्तेनैव वर्त्मना॥ १३॥
जीवं तत्वानि चानीय स्वस्थाने स्थापयेत्ततः।
इति कृत्वा भूतशुद्धिं मातृकान्यासमाचरेत्॥ १४॥

ततो हंस इति जीवं हृदयमानीय कुलकुण्डलिनीं पृथिव्यादीनि यथास्थाने स्थापयेत्। विशेषस्तु शक्तिविषये-हंस इति जीवादिकं पर-

मशिवे संयोज्य सोऽहमिति मन्त्रेण स्वस्थाने नयेत् । तथाच तन्त्रान्तरे—

सो हमे वं समाभाष्य जीवं हृदि समानयेत् ।

शूद्रे तु विशेषो; वाराहीतन्त्रे—

हंसाक्षं न स्मरेत् शूद्रो भूतशुद्धौ कदाचन ।
स्मरणान्नरकं याति दीक्षा च विफला भवेत् ॥ १ ॥

शारदायाम्—

जीवं तेजोमयं ध्यात्वा नमो मन्त्रेण योजयेत् ।

भूतशुद्धिव्युत्पत्तिमाह विशुद्धेश्वरे—

शरीराकारभूतानां भूतानां यद्विशोधनम् ।
अव्ययब्रह्मसंयोगाद्भूतशुद्धिरियम्मता ॥ १ ॥ इति ।

वाराहीये—मूलाधारात्ततो जीवं ब्रह्ममार्गेण देशिकः ।
हंसेन पुष्करस्थाने परमात्मनि योजयेत् ॥ १ ॥

ब्रह्ममार्ग्गः—सुषुम्णा, त्रिपुरासारसमुच्चये—

संयोज्य जीवमथ दुर्गममध्यनाडीमार्ग्गेण पुष्करनिविष्टशिवे सुसूक्ष्मे ।

ज्ञानार्णवे—प्राणप्रतिष्ठया पश्चात् जीवं देहे निधापयेत् ।
मुखवृत्तं समुच्चार्य्य हंसस्तु विपरीतकः ॥ १ ॥
उद्धरेत् परमेशानि विद्येयं द्व्यक्षरी मता ।
प्राणप्रतिष्ठामन्त्रोऽयं सर्वकर्म्माणि साधयेत् ॥
तेनैव विधिना देवि ! स्थिरीकुर्य्यान्निजां तनुम् ॥ २ ॥

पुरश्चरणचन्द्रिकायाम्—

अथवान्यत्प्रकारेण भूतशुद्धिर्विधीयते ।
धर्म्मकन्दसमुद्भूतं ज्ञाननालं सुशोभनम् ॥ १ ॥
ऐश्वर्य्याष्टदलोपेतं परवैराग्यकर्णिकाम् ।
स्वीयहृत्कमले ध्यायेत्प्रणवेन विकाशितम् ॥ २ ॥
जीवात्मानं हृदि ध्यायेत्प्रणवेन विकाशितम् ।
जीवात्मानं हृदि ध्यात्वा मूले संचिन्त्य कुण्डलीम् ॥
सुषुम्णावर्त्मनात्मानं परमात्मनि योजयेत् ॥ ३ ॥

ततो मातृकान्यासः—

ॐ अस्य मातृकामन्त्रस्य ब्रह्मऋषिर्गायत्रीछन्दो मातृकासरस्वती देवता हलो बीजानि स्वराः शक्तयो लिपिन्यासे विनियोगः । तद्यथा—शिरसि ब्रह्मणे ऋषये नमः । मुखे गायत्रीछन्दसे नमः । हृदि मातृकासरस्वत्यै देवतायै नमः । गुह्ये हल्भ्यो बीजेभ्यो नमः । पादयोः स्वरेभ्यः

शक्तिभ्यो नमः। सर्वाङ्गे अव्यक्ताय कीलकाय नमः। तथाच ज्ञानार्णवे—

मातृकां शृणु देवेशि ! न्यासात्पापनिकृन्तनीम्।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्रीछन्द उच्यते ॥ १ ॥
देवता मातृका देवी बीजं व्यञ्जनसञ्चयम्।
शक्तयस्तु स्वरा देवि ! षडङ्गं न्यासमाचरेत् ॥ २ ॥

ततः कराङ्गन्यासौ—अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः। इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा। उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट्। एं तं थं दं धं नं ऐं अनामिकाभ्यां हुं। ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां वौषट्। अं यं रं लं वं शं षं सं हं लं क्षं अः अस्त्राय फट् करतलकरपृष्ठाभ्यां फट्। एवं हृदयादि अँ ५ आँ हृदयाय नमः। इत्यादि। तथाच ज्ञानार्णवे—

अं आं मध्ये कवर्गं तु इं ईं मध्ये चवर्गगम्।
उं ऊं मध्ये टवर्णं तु एं ऐं मध्ये तवर्णकः ॥ १ ॥
ओं औं मध्ये पवर्गं तु बिन्दुयुक्तं न्यसेत् प्रिये !।
अनुस्वारविसर्गं तु यशवर्गौ सलक्षकौ ॥ २ ॥
हृदयं च शिरो देवि ! शिखां च कवचं तथा।
नेत्रमस्त्रं न्यसेत् ङन्तं नमः स्वाहा क्रमेण तु।
वषट्हुं वौषडस्त्रं च फडन्तं योजयेत् प्रिये !॥ ३ ॥

अन्यच्च निबन्धे—

अक्षरैर्ह्रस्वदीर्घान्तर्गतैः षड्वर्गकैः क्रमात्।
षडङ्गानि विधेयानि जातियुक्तानि देशिकैः ॥
षडङ्गो यो मातृकायाः सर्वपापहरस्मृतः ॥ १ ॥

अथान्तर्मातृकाः—अकारादिषोडशस्वरान् सबिन्दून् षोडशदलकमले कंठमूले न्यसेत्। ककारादिद्वादशवर्णान् सबिन्दून् द्वादशदले हृदये न्यसेत्। डकारादिदशवर्णान् सबिन्दून् फान्तान् दशदलकमले नाभौ न्यसेत् बकारादिषड्वर्णान् सबिन्दून् लान्तान् षड्दलकमले लिङ्गमूले न्यसेत्। वकारादिचतुरो वर्णान् सबिन्दून् चतुर्दलकमले मूलाधारे न्यसेत्। हक्षवर्णद्वयं द्विदलपद्मभ्रूमध्ये न्यसेत्।

तथाच ज्ञानार्णवे—पृष्ठपत्राम्बुजे कंठस्वरान् षोडश विन्यसेत्।
द्वादशच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत् ॥ १ ॥
दशपत्राम्बुजे नाभौ डकारादीन् न्यसेद्दश।
षट्पत्रे लिङ्गमध्यस्थे बकारादीन् न्यसेच्च षट् ॥ २ ॥

आधारे चतुरो वर्णान् न्यसेद्वादीन् चतुर्दले ।
हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत्प्रिये ! ॥ ३ ॥
इत्यन्तर्मातृकां विन्यस्य सर्वाङ्गिन्यासमाचरेत् । अगस्त्यसंहितायाम्—
एकैकवर्णमेकन्तु पत्रान्तर्विन्यसेत्प्रिये ! ।
एवमेतः प्रविन्यस्य मनसा तौ बहिर्न्यसेत् ॥ १ ॥
वैष्णवे तु—एकैकवर्णमुच्चार्य्य मूलाधाराच्छिरोऽन्तकम् ।
नमोऽन्तमिति विन्यास अन्तरः परिकीर्तितः ॥ १ ॥
अथान्तर्म्मातृकान्यासो मूलाधारे चतुर्द्दले ।
स्ववर्णमेवशषसचतुर्वर्णविभूषिते ॥ २ ॥
षड्दले विद्युतनिभस्वाधिष्ठानेऽनलत्विषि ।
वभमयवलैर्युक्तैः वर्णैः षड्भिश्च सुव्रते ! ॥ ३ ॥
मणिपूरे दशदले नीलजीमूतसन्निभे ।
डादिकांतदलैर्युक्ते विंदून्द्भाषितमस्तके ॥ ४ ॥
अनाहते द्वादशारे प्रवालरुचिसन्निभे ।
कादिठांतदलैर्युक्ते योगिनां हृदयङ्गमे ॥ ५ ॥
विशुद्धे षोडषदले धूम्राभे स्वरभूषिते ।
आज्ञाचक्रे तु चंद्राभे द्विदले हंसरञ्जिते ॥ ६ ॥
सहस्रारे हिमनिभे सर्ववर्णविभूषिते ।
अकथादित्रिरेखात्महलक्षत्रयभूषिते ॥ ७ ॥
तन्मध्ये परबिंदुं च सृष्टिस्थितिलयात्मकम् ।
एवं समाहितमना ध्यायेन्न्यासोऽयमातरः ॥ ८ ॥
ततो बाह्यमातृकाध्यानम्—
पञ्चाशल्लिपिभिर्विभक्तमुखदोर्यन्मध्यवक्षस्थलाम्
भास्वन्मौलिनिबद्धचंद्रशकलामापीनतुङ्गस्तनीम् ॥
मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-
र्बिभ्राणां विषदप्रभां त्रिनयनां वाग्देवतामाश्रयेत् ॥ १ ॥
एवं ध्यात्वा न्यसेत् ।
तत्राङ्गुलिनियमस्तन्त्रे—ललाटे नामिका मध्ये विन्यसेन्मुखपङ्कजे ।
तर्जनीमध्यमानामावृद्धानामा च नेत्रयोः ॥ १ ॥
अङ्गुष्ठेन कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकोनसि ।
मध्यास्तिस्रो गण्डयोश्च मध्यमां चोष्ठयोर्न्यसेत् २॥
अनामां दंतयोर्न्यस्य मध्यमामुत्तमाङ्गके ।
मुखेऽनामामध्यमां च हस्तपादेऽथ पार्श्वयोः ॥३॥

कनिष्ठानामिकामध्यास्तां तु पृष्ठे च विन्यसेत् ।
ताः साङ्गुष्ठा नाभिदेशे सर्वाः कुक्षौ च विन्यसेत्॥४॥
हृदये च तलं सर्वमंशयोश्च ककुत्स्थले ।
हृत्पूर्वं हस्तपत्कुक्षिमुखेषु तलमेव च ॥ ५ ॥
एताश्च मातृकाः मुद्राः क्रमेण परिकीर्तिताः ।
अज्ञात्वा विन्यसेद्यस्तु न्यासस्स्यात्तस्य निष्फलः॥६॥

तथाच गौतमीये—ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः ।
ओष्ठदन्तोत्तमाङ्गस्य दोर्यत्संध्यग्रकेषु च ॥ १ ॥
पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेंऽसके ।
ककुदंशे च हृत्पूर्वं पाणिपादयुगे तथा ॥
जठरानलयोर्न्यस्येन्मातृकार्णान् यथा क्रमात् ॥ २ ॥

तद्यथा—अंनमो ललाटे, आंनमो मुखवृत्ते, इंईं चक्षुषोः, उंऊं कर्णयोः, ऋंॠं नसोः । लृंॡं गंडयोः । एं ओष्ठं । ऐंअधरे । ओंऊर्द्ध्व दंतपंक्तौ । औं अधोदंते । अंब्रह्मरंध्रे । अः मुखे । कं बाहुमूले । खं कूर्परे । गं मणिबंधे । घं अंगुलिमूले । ङं अंगुल्यग्रे । एवं चं ५ वामबाहुमूलसंध्यग्रकेषु । एवं टं ५ दक्षिणपादमूलसंध्यग्रकेषु । तं ५ वामपादमूलसंध्यग्रकेषु । पं दक्षिणपार्श्वे । फं वामपार्श्वे । बं पृष्ठे । भं नाभौ । मं जठरे । यं हृदि । रं दक्षबाहुमूले । लं ककुदि । वं वामबाहुमूले । शं हृदादिदक्षिणकरे । षं हृदादिवामकरे । सं हृदादिदक्षपादे । हं हृदादिवामपादे । लं हृदाद्युदरे । क्षं हृदादिमुखे । सर्वत्र नमोऽन्तान् न्यसेत् ॥

---

## अथ संहारमातृकान्यासः ।

तस्य ध्यानम्—
अक्षस्रजं हरिणपोतमुदग्रटङ्कविद्याकरैरविरतं दधतीं त्रिनेत्राम् ॥
अर्द्धेन्दुमौलिमरुणामरविंदवामां वर्णेश्वरीं प्रणमतस्तनभारनम्राम् ॥१॥
न्यासस्तु क्षकाराद्यकारांतः। यथा--क्षं नमो हृदादिमुखे इत्यादि ।

तथा च—ॐ माद्यंतो नमोऽन्तो वा सबिंदुर्बिन्दुवर्जितः ।
पंचाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः ॥ १ ॥ इतिभट्टः ।

अपरश्च—चतुर्द्धा मातृका प्रोक्ता केवला बिन्दुसंयुता ।
सविसर्गा सोभया च रहस्यं शृणु कथ्यते ॥ १ ॥
विद्याकरी केवला च सोभया भक्तिदायिनी ।
पुत्रदा सविसर्गा तु सबिन्दुर्वित्तदायिनी ॥ २ ॥

विशुद्धेश्वरे—वाग्भवाद्या च वाग्सिद्ध्यै रमाद्या श्रीप्रवृद्धये ।
हल्लेखाद्या सर्वसिद्ध्यै कामाद्या लोकवश्यदा ।
श्रीकण्ठाद्य ? निमान्यस्य सर्वमंत्रः प्रसीदति ।

श्रीविद्याविषये नवरत्नेश्वरे—

वाग्भवाद्या नमान्ताश्च न्यस्तव्या मातृकाक्षराः ।
श्रीविद्याविषये मन्त्री वाग्भवाद्यष्टसिद्धये ॥ १ ॥

यामले—भूतशुद्धिलिपिन्यासौ विना यस्तु प्रपूजयेत् ।
विपरीतफलं दद्यात् अभक्त्या पूजनं यथा ॥ १ ॥

सामान्यन्यासे अंगुलेनियमस्तु गौतमीये—

मनसा विन्यसेत्तासां पुष्पेणैवाथवामुना ।
अंगुष्ठानामिकाभ्यां वाचान्यथा विफलं भवेत् ॥१॥

विशेषन्यासे तु नायं नियमः । श्यामादिविद्यायां विशेषमातृकान्यासो वक्तव्यः । अथ प्राणायामे अंगुलिनियमस्तु ज्ञानार्णवे—

भूतशुद्धिं ततः कुर्य्यात्प्राणायामक्रमेण तु ।
कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ॥१॥
प्राणायामः स विज्ञेयस्तर्ज्जनीमध्यमे विना ।
प्राणायामो द्विविधः-सगर्भो निर्गर्भश्च । तथाच—
सगर्भो मन्त्रजातेन निर्गर्भो मात्रया भवेत् ।
मात्रा च वामजानुनि तद्धस्तभ्रमणं ? यावत्ता भवेत् ॥
कालेन मात्रा सा ज्ञेया मुनिभिर्वेदपारगैः ॥ १ ॥

---

## अथ प्राणायामः ।

मूलमन्त्रस्य बीजस्य प्रणवस्य वा षोडशवारजपेन वामनासापुटादिना वायुपूरणादिकं कुर्य्यात् । तथाच कालीहृदये—

प्राणायामत्रयं कुर्य्यान्मूलेन प्रणवेन वा ।
अथवा मन्त्रबीजेन यथोक्तविधिना सुधीः ॥ १ ॥

यथा—तस्य षोडशवारजपेन वायुं पूरयेत् । तस्य चतुःषष्टिवारजपेन वायुं कुम्भयेत् । तस्य द्वात्रिंशद्वारजपेन वायुं रेचयेत् । पुनर्दक्षिणेनापूर्य उभाभ्यां कुम्भयित्वा वामेन रेचयेत् । पुनर्वामेनापूर्य उभाभ्यां कुम्भयित्वा दक्षिणेन रेचयेत् । सारसमुच्चये—'विपरीतमतो विदधीत बुधः पुनरेव तु तद्विपरीतम्' । इति ।

यौगिके पुनर्मात्रानियमः । तथा च गौतमीये—

मन्त्रप्राणायामप्रोक्तो यौगिकं कथयामि ते ।
पूरयेद्वामया विद्वान्मात्रा षोडशसंख्यया ॥१॥ इत्यादिना ।
यद्वा चतुःषोडशाष्टवारजपेन पूरकादिकं कुर्य्यात्। तथाच तन्त्रान्तरे-
पूरयेत् षोडशभिर्वायुं धारयेत्तच्चतुर्गुणैः ।
रेचयेत् कुम्भकार्द्धेन अशक्त्या च तुरीयकैः ॥
तदशक्तौ तच्चतुर्थमेवं प्राणस्य संयमः ॥ १ ॥
तस्य नित्यतामाह एवम्-'प्रणायामं विना मन्त्रं पूजने न हि योग्यता।
गोपाले तु विशेषो वक्तव्यः । ततः पीठन्यासः—ॐ आधारश-
क्तये नमः ।

ॐप्रकृत्यै नमः । एवं कूर्म्माय, अनन्ताय, पृथिव्यै, क्षीरसमुद्राय; श्वे-
तद्वीपाय, मणिमण्डपाय, कल्पवृक्षाय, मणिवेदिकायै, रत्नसिंहासनाय,
एतत्सर्वं हृदि । ततो दक्षिणस्कन्धे-धर्माय नमः । वामस्कन्धे-ज्ञानाय
नमः । वामोरौ-वैराग्याय, मुखे-अधर्माय, वामपार्श्वे-अज्ञानाय, नाभौ-
अवैराग्याय, दक्षपार्श्वे-अनैश्वर्य्याय, सर्वत्र प्रणवादिनमोऽन्तेन पूजयेत् ।
तथाच शारदायाम्— अंशोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन साधकः ।
धर्म्मज्ञानं च वैराग्यं ऐश्वर्यं क्रमशः सुधीः ॥
मुखपार्श्वे नाभिपार्श्वेष्वधर्म्मादीन्प्रकल्पयेत् ॥१॥

इत्यादि । हृदि-ॐ अनन्ताय नमः । एवं पद्माय, अं सूर्य्यमण्डलाय
द्वादशकलात्मने नमः । ॐ सोममण्डलाय षोडशकलात्मने नमः । मं
वह्निमण्डलाय दशकलात्मने नमः । सं सत्वाय, रं रजसे, तं तमसे, आं
आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने, इत्यन्तं विन्यस्य
हृत्पद्मस्य पूर्वादिकेशरेषु पीठशक्तिर्म्मध्ये पीठमनुं च न्यसेत् ।
यथा शारदायाम्—अनन्तं हृदये पद्मं तस्मिन्सूर्य्येन्दुपावकान् ।
एषु तु सकलां न्यस्य नामाद्यक्षरपूर्ववत् ॥ १ ॥
सत्वादीन् त्रिगुणान्न्यस्य तथैवात्र गुरूत्तमः ।
आत्मानमन्तरात्मानं परमात्मानमेव च ।
ज्ञानात्मकं प्रविन्यस्य न्यस्येत् पीठं मनुं ततः ॥ २ ॥
तत्र ऋष्यादिन्यासः—महेश्वरमुखाज्ज्ञात्वा यः साक्षात्तपसा मनुम् ।
संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः ॥१॥
गुरुत्वान्मस्तकं चास्य न्यासं तु परिकीर्तितः ।
सर्वेषामन्त्रतत्वानां छादनाच्छन्द उच्यते ॥ २ ॥
अक्षरत्वात्पदत्वाच्च मखे छन्दसमीरितम् ।
सर्वेषामेव जन्तूनां भाषणात्प्रेरणा तथा ॥ ३ ॥

हृदयाम्भोजमध्यस्थां देवतां तत्र तां न्यसेत्।
ऋषिच्छन्दोऽपरिज्ञानान्न मन्त्रः फलभाग्भवेत्।
दौर्बल्यं याति मन्त्राणां विनियोगमजानता ॥ ४ ॥

तत्रान्तरे—ऋषिं न्यसेन्मूर्धिनदेशे छन्दस्तु मुखपङ्कजे।
देवतां हृदये चैव बीजं तद्गुह्यदेशके।
शक्तिश्च पादयोश्चैव सर्वाङ्गे कीलकं न्यसेत् ॥१॥

ततस्तत्र तन्त्रोक्तन्यासान्कुर्यात्। तदुक्तं कुलार्णवे—

आगमोक्तेन विधिना नित्यं न्यासं करोति यः।
देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥ १ ॥
ये न्यासकवचे छन्दो मन्त्रं जपति तं प्रिये!।
विघ्नान् दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥ २ ॥
अकृत्वा न्यासजालं यो मूढत्वात्प्रजपेन्मनुम्।
सर्वविघ्नैः स बाध्यः स्याद्व्याघ्रैर्मृगशिशुं यथा ॥ ३ ॥

अङ्गन्यासे अङ्गुलीनियमस्तु—तर्जनीमध्यमानामा हृदि। तर्जनीमध्यमे शिरसि। अधोङ्गुष्ठामुष्टिः शिखायाम्। हस्तद्वयाङ्गुलिभिः शिरःप्रभृति-पादपर्यन्तम्।

"त्रिद्व्येकदशकद्वित्रिसंख्यया शैलसम्भवे अङ्गुलीनाम्" इतिवचना-दिति सर्वसाधारणम्।

यामले—हृदयं मध्यमानामतर्ज्जनीभिः स्मृतं शिरः।
मध्यमातर्ज्जनीभ्यां स्यादङ्गुष्ठेन शिखा स्मृता ॥ १ ॥
दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम्।
प्रोक्ताङ्गुलिभ्यामस्त्रस्यादङ्गक्लृप्तिरियं मता ॥ २ ॥

इति तिसृभिस्तर्ज्जनीमध्यमानामाभिः।

तर्ज्जनीमध्यमानामा प्रोक्ता नेत्रत्रये क्रमात्।
यदि नेत्रद्वयं प्रोक्तं तदा तर्ज्जनीमध्यमे ॥१॥ इतिभट्टधृतवचनात्।
हृदयादिषु विन्यस्येदङ्गमन्त्रांस्ततः सुधीः।
हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा ॥ १ ॥
शिखायै वषडित्युक्तं कवचाय हुमीरितम्।
नेत्रत्रयाय वौषट्स्यादस्त्राय फडिति क्रमात् ॥ २ ॥
षडङ्गमन्त्रानित्युक्त्वा षडङ्गेषु नियोजयेत्।
पंचांगानि मनो यत्र तत्र नेत्रमनुं त्यजेत् ॥ ३ ॥ इतिशारदावचनम्।

वैष्णवे तु—अङ्गुष्ठाऋजवेण हस्तशाखाभवेन्मुद्राहृदये शीर्षके च।

अधोऽङ्गुष्ठात्खलु मुष्टिः शिखायां करद्वन्द्वाङ्गुलयोर्वर्म्मणि स्युः।१।
नाराचमुष्ट्युधृतबाहुयुग्मकाङ्गुष्ठतर्ज्जन्यदितो ध्वनिस्तु ।
विद्वगिरवक्ताकथितास्त्रमुद्रायत्राक्षिणीतर्ज्जनीमध्यमे च ॥ २ ॥

शारदायाम्—

न्यासक्रमेण देहेषु धर्मादीन् पूजयेत्ततः ।
पुष्पाद्यैः पीठमन्वन्तं तस्मिंश्च परदेवताम् ॥१॥ इति वचनात्।
शरीरे पठिपुजामङ्गहीनमन्त्रस्यत्वेनैवाङ्गान कल्पयेत् ।

तथाच ब्रह्मयामले—स्वनामाद्यत्तरं वीजं सवषामभिधीयते ॥

ततस्तत्तत्कल्पोक्तमुद्रां प्रदर्श्य ध्यानं कृत्वा मानसैः संपूज्य शंखस्थापनं कुर्य्यात् । तथाच सनत्कुमारतन्त्रे—

अकृत्वा मानसं यागं तत्कुर्य्याद्वहिरर्च्चनम् ॥

शंखस्थापनं तु दीक्षाप्रकरणे उक्तम्—ततः शरीरे धर्म्मादिपूजा, ततः पीठपूजा, पीठस्योत्तरे गुरुपङ्क्तिं पूजयेत् , यथा वायव्यदीशपर्य्यन्तम्—ॐ गुरुभ्यो नमः । ॐ परमगुरुभ्यो नमः । ॐ परात्परगुरुभ्यो नमः । ॐ परमेष्ठिगुरुभ्यो नमः ।

त्रिपुरादौ विशेषगुरुपूजा वक्तव्या । पीठमध्ये—ॐ आधारशक्तये नमः। एवं कूर्म्माय, शेषाय, पृथिव्यै, क्षीरसमुद्राय, श्वेतद्वीपाय, मणिमण्डपाय, कल्पवृक्षाय, मणिवेदिकायै, रत्नसिंहासनाय, पद्माय, अग्निकोणे—धर्म्मायपद्ममालाय नैऋतीवाय्वीशानेषु, ज्ञानं वैराग्यमैश्वर्य्यं च पूजयेत् । ततः पूर्वादिचतुर्दिक्षु-अधर्म्माज्ञानवैराग्यानैश्वर्य्यान् पूजयेत् । मध्ये-अनन्तादि ह्रीं ज्ञानात्मने नमः इत्यन्त प्रपूज्य पूर्वादिकेशरेषु मध्येषु च तत्तत्कल्पोक्तां पीठशक्तिं संपूज्य पीठमनुं पूजयेत् । तारादिविद्यादौ विशेषो वक्तव्यः । पूर्वादिदिङ्‌नियमस्तु यामले—

पूज्यपूजकयोर्म्मध्यं प्राचीति कीर्त्यते बुधैः ।
तद्दक्षिणं दक्षिणं स्यादुत्तरं चात्तमं मतम् ॥
पृष्ठं तु पश्चिमं ज्ञेयं सर्वत्रैवं प्रयोजयेत् ॥ १ ॥

इति पुंदेवतापरम् ।

पुरंदरमुखो मन्त्री यदा यन्त्रं प्रपूजयेत् ।
देवीपश्चात्तदा प्राची प्रतीची देवता पुनः ॥ १ ॥
एवमुत्तरामुखो भूत्वा यदा देवीं प्रपूजयेत् ।
उत्तरा सा यदा देवि ! पूर्वा सैव निगद्यते ॥
ईशानकोणं देवेशि ! तत् तदाग्रं यं प्रचक्षते ॥२॥ इति ज्ञानार्णवे

श्रीक्रमवचनात् । तेन विधिना मन्त्री पूर्वादौ पूजनं चरेत् ॥

आगमकल्पद्रुमे—मूलमन्त्रं समुच्चार्य्य सुषुम्णावर्त्मना सुधीः ।
आनीय तेजः स्वस्थानान्नासिकारंध्रनिर्गतम् ॥ १ ॥
करस्थमातृकाम्भोजे चैतन्यं पुष्पसंचये ।
संयोज्य मन्त्रमध्ये तत्संस्थाप्यावाहयेत्ततः ॥ २ ॥

अविशेषे यन्त्रनियमस्तु मत्स्यसूक्ते—
अनुक्तकल्पे यन्त्रं तु लिखेत् पद्मदलाष्टकम् ।
षट्कोणकर्णिकं तत्र वेदद्वारोपशोभितम् ॥ १ ॥

ततः पुनर्ध्यात्वावाहनादिप्रतिष्ठान्तं कर्म्म कुर्य्यात् । ततः षोडशोपचारैः पंचोपचारैर्वा पूजयेत् । षोडशोपचारनियमस्तु मत्स्यसूक्ते—
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काचमनस्नानवसनाभरणानि च ॥ १ ॥
सुगंधिसुमनोधूपदीपनैवेद्यवन्दना ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥ २ ॥

अथ वा एषामभावे पंचोपचारान् कल्पयेत्—
गंधादयो नैवेद्यांताः पूजा पंचोपचारिकाः । इति ।

विष्णुविषये तु—अर्घ्याद्याः पंच पंचैव गंधाद्या इति भेदतः ।
प्रयोजयेदर्चनायामुपचारान् दश क्रमात् ॥ १ ॥

पुष्पपर्य्यन्तमुपचारं तत्तन्मन्त्रेण दत्वा षडङ्गेन पूजयेत् । पुष्पदाने तु विशेषः—
पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम् ।
दुःखदं तत्समाख्यातं यथोत्पन्नं तथार्प्पणम् ॥
अधोमुखं फलं नेष्टं पुष्पाञ्जलिविधौ न च ॥ १ ॥

ततो मूर्द्ध गुह्यापादसर्वाङ्गकेषु मूलेन पंचपुष्पाञ्जलिं दत्वा तत्तत्कल्पोक्तावरणपूजां कुर्य्यात् । तथाच—
पंचपुष्पांजलीन्दत्वा परिचारार्च्चनं चरेत् ॥ इतिभट्टः । ततो धूपदीपौ दद्यात् । तद्यथा—जयध्वनिमन्त्रमातः स्वाहेति पुष्पाक्षतैर्घण्टां संपूज्य वामहस्तेन तां वादयन् । तत्तन्मंत्रेण धूपं दद्यादेवं दृष्टिपर्य्यन्तं दीपं दद्यात् । ततो मूलेन पुष्पाञ्जलित्रयं दत्वा नैवेद्यमानीय फडिति सम्प्रोक्ष्य चक्रमुद्रयाभिरक्ष्य तदुपरि मूलमन्त्रमष्टधा जप्त्वा धेनुमुद्रयामृतीकृत्य मूलमुच्चार्य्य नैवेद्यं दद्यात् ।
यत्तोयमर्घ्यपात्रस्थं तन्निराय निवेदयेत् ।
अन्यतोयैस्तदुत्सृष्टमर्घ्यपात्रे स्थितेतरैः ।
न गृह्णाति महादेवि ! दत्तं विधिशतैरपि ॥ १ ॥

इति वचनाद्यावदुपचारम् अर्घ्यपात्रस्थजलेनोत्सृज्य दद्यात् । ततः पुनराचमनीयं ताम्बूलादि दद्यात् । वैष्णवे तु—नैवेद्यविशेषो वक्तव्यः । ततः सपरिवारदेवतां गन्धादिभिरभ्यर्च्य नृत्यगीतैर्देवं सन्तोष्य जयजयेत्युक्त्वा विशेषार्घ्यं दद्यात् । ततः पुष्पाञ्जलिं दद्यात् । दाने तु आदौ मूलं, ततो द्रव्योल्लेखः, ततः सम्प्रदानम् , ततस्त्यागात्मकं पदमिति सर्वत्र ।

तथाच कुलार्णवे-आदौ मन्त्रं समुच्चार्य्य पश्चाद्देयं समुच्चरेत् ।
सम्प्रदानं तदन्ते तु त्यागार्थकपदं ततः ॥
एवं क्रमेण देवेशि ! उपचारान् प्रकल्पयेत् ॥ १ ॥

'मन्त्रान्ते कर्म्मसन्निपात' इति न्यायाच्च । ततश्चुल्लुकोदकमादाय ॐ इतः पूर्वं प्राणबुद्धिदेहधर्म्माधिकारितो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा । मां मदीयं सकलं सम्यगमुकदेवतायै अर्पयेत् ॐतत्सत् । नमस्कारानन्तरं वा ततोऽष्टोत्तरशतं सहस्रं वा जप्त्वा—

ॐगुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादात्त्वयि स्थिते ॥ १ ॥

अन्यत्र गोप्त्री देवीतिविशेषः । इति जपं समर्प्य स्तुत्वा ऽष्टाङ्गप्रणामं कुर्य्यात् । अष्टाङ्गो यथा—

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा ।
वचसा मनसा चेति प्रणामो ऽष्टाङ्ग ईरितः ॥ १ ॥
बाहुभ्यां चैव जानुभ्यां शिरसा वचसा दृशा ॥ २ ॥
पञ्चाङ्गोऽयं प्रणामः स्यात् पूजासुप्रवराविमौ ।
भूमौ निपत्य यः कुर्य्यात् कृष्णे ऽष्टाङ्गनतिं सुधीः ॥ ३ ॥
सहस्रजन्मजं पापं त्यक्त्वा वैकुण्ठमाप्नुयात् ।

तथा—वेदविद्भ्यो धरां दत्वा यत्फलं लभते नरः ।
तत्फलं लभते भक्त्या कृष्णे कृत्वा प्रदक्षिणम् ॥ १ ॥

कृष्ण इत्युपलक्षणम् । विश्वसारे—
शङ्खहस्तेन सर्वत्र दक्षिणं परिकीर्तितम् ॥ १ ॥

नतिविशेषस्तु यामले—
त्रिकोणकारा सर्वत्र नतिः शक्तेः समीरिता ।
दक्षिणाद्वायवीं गत्वा दिशं तस्याश्च शाम्भवीम् ॥ १ ॥
ततश्च दक्षिणां गत्वा नमस्कारत्रिकोणवत् ।
अर्द्धचन्द्रं महेशस्य पृष्ठतश्च समीरिता ॥ २ ॥

शिवप्रदक्षिणे मन्त्री अर्द्धचन्द्रक्रमेण तु ।
सव्यासव्यक्रमेणैव सोमसूत्रं न लंघयेत् ॥ ३ ॥

सोमसूत्रम्—जलनिःसारणस्थानम् ।

प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः ।
दर्शयेद्दक्षिणं पार्श्वं मनसापि च दक्षिणः ।
त्रिधा च वेष्टयेत् सम्यक् देवतायाः प्रदक्षिणम् ॥ १ ॥
एकहस्तं प्रणामश्च एकं वापि प्रदक्षिणः ।
अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम् ॥ २ ॥

देवताङ्गे आवरणदेवतां विलाप्य क्षमस्वेति विसर्जनं कृत्वा संहारमुद्रया तत्तेजः पुष्पैः सार्द्धं स्वहृदयमानयेत् । तथाच—

निधाय देवतां पश्चात्स्वीयकृत्सरसीरुहे ।
सुषुम्णावर्त्मना पुष्पमाघ्रायोद्वासयेत्ततः ॥ १ ॥

ऐशान्यां मण्डलिकां कृत्वा निर्म्माल्यशेषं दद्यादिति । वैष्णवे तु—ॐ विश्वक्सेनाय नमः । शक्तौ—ॐशेषिकायै नमः । शिवे—चण्डेश्वराय नमः । सूर्य्ये—तेजश्चण्डाय नमः । गणेशे—उच्छिष्टगणेशाय नमः । कालिकायै—उच्छिष्टचाण्डालिन्यै नमः । इत्यादि । तथाच—

विश्वक्सेनस्मृतौ विष्णुस्तेजश्चण्डविवस्वतः ।

तथाच विद्यानन्दनिबन्धे-सूर्य्ये गणपतावुग्रे शाक्ते शवेऽथ वैष्णवे ।
तेजश्चण्डमथोच्छिष्टसोजामुच्छिष्टपूर्विका ॥
चाण्डालिनीं शेषिकां च विश्वक्सेनं क्रमाद्यजेत् ॥ १ ॥

उना-शम्भुना वर्त्तत इति सो दुर्गा तज्जो गणेशः । ततः पादोदकं च पीत्वा नैवेद्यं किञ्चित् स्वीकृत्यान्यद्यथायोग्याय दत्वा यथासुखं विहरेदिति ।

मत्स्यसूक्ते—अनिवेद्य न भुंजीत मत्स्यमांसादिकं तु यत् ।
अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम् ॥ १ ॥

विष्णोरिति तत्तद्देवतापरम् ।

तथा भैरवतन्त्रे-हृदये च बहिर्देवीं समर्प्य विधिवत्ततः ।
निर्माल्यं च शुचौ देशे नैवेद्यं भक्षयेत्सुधीः ॥ १ ॥

तन्त्रान्तरे-निर्माल्यं शिरसा धार्य्यं सर्वांगे चानुलेपनम् ।
नैवेद्यं चोपभुञ्जीत दत्वा तद्भक्तिशालिने ॥ १ ॥
देवतार्च्चावशिष्टं यत् सलिलं शंखमध्यगम् ।
अङ्गलग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति ॥ २ ॥

इति सामान्यपूजापद्धतिः ।

---

ॐ नमः परदेवतायै ।

यामाहुराद्यां प्रकृतिं मुनीन्द्राः पद्मां त्रिशक्तिं गिरमन्नपूर्णाम् ।
नित्यां च दुर्गां त्वरितां तथान्ये भजामि नित्यां भुवनेश्वरीन्ताम् ॥१॥

अथ भुवनेश्वरीमन्त्राः—

अथ वक्ष्ये जगद्धात्रीमधुना भुवनेश्वरीम् ।
ब्रह्मादयोऽपि यां ज्ञात्वा लेभिरे परमां श्रियम् ॥ १ ॥
न कुलीशोऽग्निमारूढो वामनेत्रार्द्धचन्द्रवान् ।
बीजं तस्याः समाख्यातं सेवितं सिद्धिकाङ्क्षिभिः ॥ २ ॥

नकुलीशो—हकारः, अग्निः-रेफः, वामनेत्रम्-ईकारः, अर्द्धचन्द्रो-अनुस्वारः ।

भुवनेश्वरीपदार्थमाह दक्षिणामूर्तिसंहितायाम्—

व्योमबीजमहेशानि कैलासादिप्रतिष्ठितम् ।
वह्निबीजात्सुवर्णादि निष्पन्नं बहुधा प्रिये ! ॥ १ ॥
तेनायं वर्तते लोको भूमिमण्डलसंस्थितः ।
तुर्य्यस्वरेण पाताले शेषरूपेण वर्तते ॥ २ ॥
महाभूमण्डलं तस्मात्पातालस्यापि नायिका ।
अत एव महेशानि भुवनाधीश्वरी प्रिये ! ॥ ३ ॥
हकारे व्योमतूर्य्येण स्वरेणानिलसम्भवः ।
विकारे सति रेफेण साक्षाद्वह्निस्वरूपिणी ॥ ४ ॥
वह्निबीजं वसुज्ञेयं तस्माद्रेफं च सुन्दरी ।
अत एव महेशानि सवायोः समताभवेत् ॥ ५ ॥
बिन्दुचक्रामृता देवी प्लावयन्ती जगत्त्रयम् ।
द्रवरूपी भवेत्तस्मात्प्लवन्ती चार्द्धमात्रया ।
अत एव महेशानि भुवनेशीति कथ्यते ॥ ६ ॥

अस्य पूजाप्रयोगः सामान्यपूजापद्धत्युक्ता । प्रातःकृत्यादि पीठन्यासान्तं कर्म्म विधाय केशरेषु मध्येषु च पीठशक्तिर्न्यसेत् । तद्यथा—

जया विजया अजिता अपराजिता नित्या विनाशिनी दोग्ध्री अघोरा मङ्गला, वाक्यं तु—ॐ जयायै नमः इत्यादि । कर्णिकायां सर्वशक्तिकमलासनाय नमः ॥

तत ऋष्यादिन्यासः—भुवनेश्वरीमन्त्रस्य शक्तिर्ऋषिर्गायत्रीछन्दो हकारो बीजं ईकारः शक्तिः रेफः कीलकं भुवनेश्वरीदेवता चतुर्वर्गसिद्ध्यर्थं जपे विनियोगः ।

शिरसि शक्तये ऋषये नमः । मुखे गायत्रीछन्दसे नमः । हृदि भुव-

नेश्वर्य्यै देवतायै नमः । गुह्ये हं बीजाय नमः । पादयोः ईं शक्तये नमः । सर्वाङ्गे रं कीलकाय नमः ।

ततो मन्त्रन्यासं कुर्य्यात् । शिरसि हल्लेखायै नमः । नमः सर्वत्र । वदने एं गगनायै । हृदि उं रक्तायै । गुह्ये ईं करालिकायै । पादयोः अं महोच्छूदमायै । एवं मूर्द्धन्प्राग्याम्योदीच्यपश्चिमेषु च वक्त्रेषु तान्न्यसेत् ।

एतासां बीजानि निबन्धे—

हल्लेखा मूर्ध्नि वदने गगनां हृदयाम्बुजे ।
रक्तां करालिकां गुह्ये महोच्छूदमां पदद्वये ॥ १ ॥
ऊर्द्ध्वप्राग्दक्षिणोदीच्य पश्चिमेषु मुखेषु ताः ।
सत्यादि पञ्च ह्रस्वाढ्या न्यस्तव्या भूतसप्रभाः ॥ २ ॥

ततः कराङ्गन्यासौ कुर्य्यात् । ह्रां अङ्गुष्ठाभ्यां नमः । ह्रीं तर्ज्जनीभ्यां स्वाहा । ह्रुं मध्यमाभ्यां वषट् । ह्रैं अनामिकाभ्यां हुं । ह्रौं कनिष्ठाभ्यां वौषट् । ह्रः करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिषु । ह्रां हृदयाय नम इत्यादि ।

तथाच--षड्दीर्घभाजाबीजेन कुर्य्यादङ्गक्रियां मनोः ।
स्वच्छन्दसंग्रहे—स्वरं विहाय बीजं तं दीर्घषट्केन योजयेत् ।
षडङ्गानि विधेयानि सर्वत्रायं विधिः स्मृतः ॥ १ ॥

अङ्गुलिनियमस्तु पूर्व्वमेवोक्तः—सर्वत्र कराङ्गन्यासे एवं क्रमः । ततो भाले गायत्रीसहितब्रह्मणे नमः । दक्षिणकपोले—ॐसावित्रीसहितविष्णवे नमः । वामकपोले—ॐवागेश्वरीसहितमहेश्वराय नमः । मुखे—ॐरतिसहितस्मराय नमः । वामकर्णोपरि—ॐश्रीसहितधनपतये नमः । सव्यकर्णोपरि—ॐपुष्टिसहितगणपतये नमः। दक्षिणकर्णान्तराले-ॐशंखनिधये नमः । वामगण्डकर्णान्तराले—ॐपद्मनिधये नमः । मुखे-ॐ भुवनेश्वर्य्यै देवतायै नमः। एवं कण्ठमूलदक्षिणवामांस्तनवामांशहृदयदक्षिणांशपार्श्वद्वयनाभिषु तान्न्यसेत् । तथाच—

ब्रह्माणं विन्यसेद्भाले गायत्र्या सह संयुतम् ।
सावित्र्या संयुतं विष्णुं कपोले दक्षिणे न्यसेत् ॥ १ ॥
वागीश्वर्या समायुक्तं वामगण्डमहेश्वरम् ।
न्यसेच्छ्रिया धनपतिं वामकर्णाग्रके पुनः ॥ २ ॥
रत्या स्वरं प्रविन्यस्य पुष्ट्या गणपतिं न्यसेत् ॥ ३ ॥
सव्यकर्णोपरि निधीन्कर्णगण्डान्तरालयोः ।
न्यस्तव्यं वदने मूलं भूयश्चैतांस्तनौ न्यसेत् ॥ ४ ॥

तथाच शारदायाम्—कण्ठमूले स्तनद्वन्द्वे वामांसे हृदयाम्बुजे ।

सव्यांशे पार्श्वयुगले नाभिदेशे च देशिकः ॥ १ ॥

तथावर्णाभिन्नन्यासे तु विश्वसारे—

ॐ ताराद्यङ्के युतं च नमोऽन्तं च यथास्थितिः ।
विधिना विन्यसेत्सर्वं शङ्करस्य मतेन च ॥ १ ॥

एवं सर्वत्र । ततो भाले-ॐब्राह्म्यै नमः, वामांशे-ॐमाहेश्वर्य्यै नमः, नमः सर्वत्र । वामपार्श्वे—ॐकौमार्य्यै, जठरे-ॐवैष्णव्यै, दक्षिणपार्श्वे-ॐवाराह्यै, दक्षिणांसे-ॐइन्द्राण्यै, अपरगले--ॐचामुण्डायै, हृदि-ॐमहालक्ष्म्यै, इति न्यस्य मूलेन व्यापकत्रयं कुर्य्यात् । तथा—

भालांशे पार्श्वे जठरे पार्श्वे अंशे गले हृदि ।
ब्रह्माण्याद्यास्ततो न्यस्य विधिना प्रोक्तलक्षणाः ।
मूलेन व्यापकं देहे न्यस्य देवीं विभावयेत् ॥ १ ॥ इति ।

ततो ध्यानम्-उद्यद्दिनद्युतिमिन्दुकिरिटां तुङ्गकुचां नयनत्रययुक्ताम् ।
स्मेरमुखीं वरदांकुशपाशाभीतिकरांप्रभजे भुवनेशीम् ॥ १ ॥

एवं ध्यात्वा मानसैः सम्पूज्य बहिः पूजामारभेत् ।

पूजायन्त्रम्—पद्ममष्टदलं बाह्ये वृत्तं षोडशभिर्द्दलैः ।
विलिखेत् कर्णिकामध्ये षट्कोणमतिसुन्दरम् ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥ १ ॥

ततो दीक्षापद्धत्युक्तक्रमेण शङ्खस्थापनं कुर्य्यात् । ततः सामान्यपद्धत्युक्तक्रमेण पीठपूजां विधाय पीठशक्ति पूजयेत । तद्यथा पूर्वादिकेशरेषु—ॐजयायै नमः । एवं विजयायै । ॐअजितायै । ॐअपराजितायै । ॐनित्यायै । ॐविलासिन्यै । ॐदोग्ध्र्यै । ॐअघोरायै । मध्ये ॐमङ्गलायै ।

तथाचनिबन्धे--ततः सम्पूजयेत्पीठं नवशक्तिसमन्वितम् ।
जयाख्या विजया पश्चादजिताह्यपराजिता ॥ १ ॥
नित्या विलासिनी दोग्ध्री त्वघोरा मङ्गलापि च ।
बीजाढ्यमानसं दत्वा मूर्तिं मूलेन कल्पयेत् ॥ २ ॥

सर्वत्र प्रणवादिनमोऽन्तेन पूजयेत् । तदुपरि ह्रीं सर्वशक्तिपद्मासनाय नमः । ततः पूर्ववद्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यंतं विधायावरणपूजामारभेत् । यथा-ह्रां हृदयाय नमः, इत्यादिना, षडङ्गेन पूजयेत् । ततः कर्णिकामध्ये-ॐहृल्लेखायै नमः । पूर्वे एं गगनायै नमः । दक्षिणे-ॐरक्तायै । उतरे-ईं करालिकायै । पश्चिमे-ॐमहोच्छुष्मायै, षट्कोणेषु पूर्वादि ॐगायत्र्यै ॐब्रह्मणे ॐनैऋते ॐसावित्र्यै ॐविष्णवे ॐवायौ ॐसरस्वत्यै ॐरुद्राय वह्निकोणेॐश्रियै ॐधनपतये, पश्चिमे ॐरत्यै

ॐस्मराय, ऐशान्याम् पुष्ट्यै ॐगणपतये । षट्कोणस्योभयपार्श्वयोः ॐशङ्खनिधये । ॐपद्माय । नमः सर्वत्र । केशरेष्वग्निनिर्ऋतिवाय्वीशानेषु मध्ये दिक्षु च ह्रां हृदयाय नम इत्यादिना पूजयेत् । तथाच निबन्धे-

केशरेष्वग्निकोणादिहृदयादीनि पूजयेत् ।
नेत्रमग्ने दिशास्वस्त्रं ध्यातव्याश्चाङ्गदेवताः ॥ १ ॥

एवं सर्वत्र । भैरव्यादौ विशेषो वक्तव्यः । पूर्वाद्यष्टदले-ॐअनङ्गकुसुमायै नमः । नमः सर्वत्र । ॐअनङ्गकुसुमातुरायै । ॐअनङ्गमदनायै । ॐ अनङ्गमदनातुरायै । ॐभुवनपालायै । ॐगगनवेगायै । ॐशशिरेखायै । ॐगगनरेखायै । षोडशदले पूर्वादि-ॐ करालयै । ॐविकरालयै । ॐ उमाय । ॐसरस्वत्यै । ॐश्रियै । ॐदुर्गायै । ॐउषायै । ॐलक्ष्म्यै । ॐश्रुत्यै । ॐस्मृत्यै । एवं धृत्यै । श्रद्धायै । मेधायै । मत्यै । कान्त्यै । आर्य्यायै । तद्बहिर्भूगृहे-अनङ्गरूपायै । अनङ्गमदनायै । अनङ्गमदनातुरायै । भुवनरेखायै। भुवनपालिकायै । सर्वशिशिरायै । अनङ्गवेदनायै । अनङ्गमेखलायै । प्रणवादिनमोऽन्तेन पूजयेत् । तद्बहिश्चतुरस्रं-ॐपूर्वादि ॐलां इंद्राय देवाधिपतये सायुधाय सवाहनाय सपरिवाराय नमः । ॐवां अग्नये तेजोधिपतये सायुधाय सवाहनाय सपरिवाराय नमः । मां यमाय प्रेताधिपतये सायुधेत्यादि । क्षांनिर्ऋतये रक्षोधिपतये सायुधेत्यादि । वां वरुणाय जलाधिपतये सायुधेत्यादि । यां वायवे प्राणाधिपतये सायुधेत्यादि । सां सोमाय ताराधिपतये सायुधेत्यादि । हां ईशानाय गणाधिपतये सायुधेत्यादि । इन्द्रेशानयोर्म्मध्ये-आं ब्रह्मणे प्रेताधिपतये सायुधेत्यादिनि । निर्ऋतिवरुणयोर्म्मध्ये—ॐह्रीं अनन्ताय नागाधिपतये सायुधेत्यादि ।

तथा च—लोकपाला बहिः पूज्याः समस्ताश्चतुरस्रके ।
पुरुहूतेशयोर्म्मध्ये रक्षोवरुणयोस्तथा ॥ १ ॥
ब्रह्मविष्णू सदा पूज्यौ दिगीशाम्बाविदुर्बुधाः ।
इन्द्रादिलोकपालानां ये मन्त्रास्ते ध्रुवादिकाः ।
स्वस्वबीजान्विताः सर्वे स चतुर्थीनमोन्तिकाः ॥ २ ॥

इति वचनात् । सर्वत्र प्रणवादिवास्वस्व बीजमाह मन्त्रदर्शने-

पृथ्व्यग्निपवनाद्यंतवरुणानीलसेष्वरैः ।
अनन्तबिंदुं संयुक्तैरच्यां पाशेन मायया ॥ १ ॥

तथा—अन्ते यजेल्लोकपालान् मूलपारिदधान्वितान् ।
हेतिजात्यधिपोपेतान् दिक्षु पूर्वादितो यजेत् ॥ १ ॥

सवाहनायेति दीपिका । तद्बहिः-पूर्वादिवज्राय शक्तये दण्डाय

खड्गाय पाशाय अङ्कुशाय गदायै शूलाय पद्माय चक्राय। प्रणवादिनमो-ऽन्तेन पूजयेत्। ततो धूपदीपादि विसर्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं द्वात्रिंशल्लक्षजपः।

तथा च—प्रजपेन्मन्त्रविन्मन्त्रं द्वात्रिंशल्लक्षमानतः।
त्रिस्वादुयुक्तैर्जुहुयाच्चाष्टद्रव्यैर्द्दशांशतः॥ १॥

चाष्टद्रव्याणि यथा—अश्वत्थोदुम्बरप्लक्षन्यग्रोधसमिधस्तिलाः।
सिद्धार्थापायसाज्यानि द्रव्याण्येष्टौ विदुर्बुधाः॥१॥

त्रिस्वादितिघृतमधुशर्करेति।

मन्त्रान्तरमाह—वाग्भवं शम्भुवनिता रमाबीजत्रयात्मकम्।
मन्त्रं समुद्धरेन्मन्त्री त्रिवर्गफलसाधनम्।
न्यासपूजादिकं सर्वं पूर्ववच्च समाचरेत्॥ १॥

षडङ्गन्यासे तु विशेषः—ऐं ह्रां अङ्गुष्ठाभ्यां नम इत्यादि।

तथा च निबन्धे—
षड्दीर्घभाजा बीजेन वाग्भवाद्येन कल्पयेत्।
षडङ्गानि मनोरस्य जातियुक्तेन कल्पयेत्॥ १॥

ध्यानन्तु—सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्।
पाणिभ्यामणिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रती
सौम्यां रत्नघटस्थसव्यचरणा ध्यायेत्परामम्बिकाम्॥१॥ इति।

अस्य पुरश्चरणजपो द्वादशलक्षमानतः। तथा च शौनदीपे—
रविलक्षं जपेन्मन्त्रं पायसैर्मधुरान्वितैः।
तद्दशांशेन जुहुयात् पीठे प्रागीरिते यजेत्॥१॥ इतिवचनात्।

मन्त्रान्तरमाह--
वाग्बीजपुटिता माया विद्येयं त्र्यक्षरीमता।

अस्य मन्त्रस्य पूर्ववन्न्यासः। कराङ्गन्यासस्तु--ऐं ह्रां ऐं अङ्गुष्ठा-भ्यां नमः इति। ऐं ह्रां ऐं हृदयाय नम इत्यादि।

तथा च—मध्येन दीर्घयुक्तेन वाक्पुटेन प्रकल्पयेत्।
षडङ्गानीत्यादि।

ध्यानन्तु--श्यामाङ्गीं शशिशेखरां निजकरैर्द्दां च रक्तोत्पलां—
रत्नाढ्यं चषकं परं भयहरं संबिभ्रतीं शाश्वतीम्।
मुक्ताहारलसत्पयोधरनतां नेत्रत्रयोल्लासिनीं।
वन्देऽहं सुरपूजितं हरवधूं रक्तारविन्दस्थिताम्॥ १॥

एवं ध्यात्वा पूर्ववद्यजेत्। अष्टपत्रेषु विशेषः—आं ब्राह्मयै। ईं माहे-

ब्रह्म्याऽं कामाख्यै । ऋं वैष्णव्यै । लं वाराह्यै । ऐं इन्द्राण्यै । ओं चामुण्डायै । अः महालक्ष्म्यै । अं असिताङ्गाय । ईं रुरवे । उं चण्डाय । ऋं क्रोधाय । लं उन्मत्ताय । ऐं कपालिने । ओं भीषणाय । अं संहाराय । नमः सर्वत्र । यद्वा-अं आं असिताङ्गब्राह्मीभ्यां नमः इत्यादि । तथाच--

दीर्घाद्या मातरः प्रोक्ता ह्रस्वाद्या भैरवाः स्मृताः ॥

अन्यत्सर्वं पूर्ववद्बोद्धव्यम् । अस्य पुरश्चरणजपो दशलक्षः । मधुराक्तैः पलाशपुष्पैर्दशांशहोमः ।

तथाच--तत्वलक्षं जपेन्मन्त्रं जुहुयात्तद्दशांशतः ।

पलाशपुष्पैः स्वाद्वक्तैः पुष्पैर्वा राजवृक्षजैः ॥ १ ॥

तत्वलक्षम्—दशलक्षं अन्तरङ्गत्वादितिगुरवः । चतुर्विंशतिलक्षमिति केचित् ।

मन्त्रान्तरस्तु-अनन्तो बिन्दुना युक्तो मायाब्रह्माग्नितारवान् ।

पाशादित्र्यक्षरो मन्त्रः सर्वकामफलप्रदः ॥ १ ॥

अस्यैकाक्षरीवदपि छंदो देवता न्यासः।अङ्गमन्त्रस्तु-ह्रां अङ्गुष्ठाभ्यां नम इत्यादि । ह्रीं तर्जनीभ्यां स्वाहा इत्यादि ॥ ह्रां हृदयाय नमः । ह्रीं शिरसे स्वाहा हृदयाय नम इत्यादि च सर्वत्र । ह्रीं बीजेन कराङ्गन्यासौ कुर्यात् ।

तथाच निबन्धे—ऋष्याद्याः पूर्वमुक्ताः स्युर्बीजेनाङ्गक्रिया मता ।

ध्यानं तु यथा-वराङ्कुशौ पाशमभीतिमुद्रां करैर्वहन्तीं कमलासनस्थाम् ।

बालार्ककोटिप्रतिमां त्रिनेत्रां भजेऽहमाद्यां भुवनेश्वरीं ताम् ॥ १ ॥

अथ पूजा एकाक्षरीवत् । अष्टदले ब्राह्मयादिगतं पूर्ववत्पूजयेत् । षोडशदले पूजाया अनुक्तत्वात् षोडशदलाभावः ।

तथाच निबन्धे—अङ्गानि केशरे पूज्याः पत्रस्था मातरः क्रमात् ।

अस्य पुरश्चरणजपो दशलक्षजपः । दधिमधुघृताक्ताभिरश्वत्थोदुम्बरप्लक्षन्यग्रोधानां समिद्भिस्तिलैर्दुग्धाक्तैर्दशसहस्रहोमः ।

तथाच-हविष्यभुग्जपेन्मन्त्रं तत्वं लक्षं जितेन्द्रियः ।

तत्सहस्रं प्रजुहुयाज्जपान्ते मन्त्रवित्तमः ॥ १ ॥

दधिक्षौद्रघृताक्ताभिः समिद्भिः क्षीरभूरुहाम् ।

तत्संख्यया तिलैःशुद्धैः पयोक्तैर्जुहुयात्ततः ॥ २ ॥

अत्र च तत्वशब्देन दश उच्यन्ते "शक्तेर्दशतत्वानि" इतिवचनात् ।

अन्येतु भुवनेश्वरीमन्त्रान नोक्तवन्तः, अप्रसिद्धत्वात् ॥

---

## अथाऽन्नपूर्णामन्त्राः ॥

माया हृद्भगवत्यंते माहेश्वरि पदं ततः ।

अन्नपूर्णे ठ युगलं मनुः सप्तदशाक्षरः ॥ १ ॥

कल्पे च—प्रणवाद्या यदा देवि तदा सप्तदशाक्षरी ।
अन्नप्रदा मोक्षदा च सदा विभवदायिनी ॥ १ ॥
मायाद्या च यदा देवी तदा सा सकलेष्टदा ।
श्रीबिजाद्या यदा देवी तदा सुखविवर्द्धिनी ॥ २ ॥
वाग्बीजाद्या यदा विद्या वागीशत्वप्रदायिनी ।
कामाद्या च यदा विद्या सर्वकामप्रदायिनी ॥ ३ ॥
तारा मायादिका विद्या भोगमोक्षप्रदायिनी ।
मायाश्रीयुग्मबिजाद्या सदा विभवदायिनी ॥
श्रीयुग्म युग्मबीजाद्या सर्वसंपत्तिपूरणी ॥ ४ ॥

अस्य पूजाप्रयोगः—प्रातःकृत्यादि पीठन्यासान्तं विधाय हृत्पद्मस्य केशरेषु मध्ये च भुवनेश्वरीपीठमन्वन्तं पीठशक्तिं न्यस्य ऋष्यादिन्यासं कुर्य्यात् ।

तद्यथा—शिरसि-ब्रह्मणे ऋषये नमः । मुखे-पंक्तिच्छन्दसे नमः । हृदि-अन्नपूर्णायै देवतायै नमः ।

तत्रैव—एतेषां मन्त्रराशीनामृषिर्ब्रह्मा उदाहृतः ।
पङ्क्तिच्छन्दः समाख्यातं देवता चान्नपूर्णिका ॥ १ ॥

ततः कराङ्गन्यासौ—ह्रीं अङ्गुष्ठाभ्यां नम इत्यादि । ह्रीं हृदयाय नम इत्यादि । सर्वत्र मायाबीजेन कुर्य्यात् ॥ तथाचनिबन्धे—
अङ्गानि मायया कुर्य्यात्ततो देवीं विचिन्तयेत् ।

कल्पे च—यद्बीजाद्या भवेद्विद्या तद्बीजेनाङ्गकल्पना ।

अथ ध्यानम्—

रक्तां विचित्रवसनां नवचन्द्रचूडामन्नप्रदाननिरतां स्तनभारनम्राम् ।
नृत्यन्तमिन्दुसकलाभरणं विलोक्य हृष्टां भजेद्भगवतीं भवदुःखहन्त्रीम् ।

एवं ध्यात्वा मानसैः संपूज्य शंखस्थापनं कुर्य्यात् । ततः सामान्योक्तपीठपूजां विधाय भुवनेश्वरीमन्त्रोक्तजपादिपीठमन्वंतां पूजां विधाय पुनर्ध्यात्वावाहनादिपंचपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजामारभेत् । तद्यथा—

केशरेषु अग्निकोणे ह्रीं हृदयाय नमः । नैर्ऋते ह्रीं शिरसे स्वाहा । वायव्ये ह्रीं शिखायै वषट् । ऐशान्ये ह्रीं कवचाय हुं । मध्ये ह्रीं नेत्रत्रयाय वौषट् । चतुर्दिक्षु ह्रीं अस्त्राय फट् । अष्टदलेषु पूर्वादिब्राह्म्यै, माहेश्वर्य्यै कौमार्य्यै, वैष्णव्यै, वाराह्यै, इन्द्राण्यै, चामुण्डायै, महालक्ष्म्यै, प्रणवादिनमोऽन्तेन पूजयेत् । तत्रैव—

दलेषु पूजयेद्‌ता ब्राह्मयाद्याः क्रमतः सुधीः ।
शूद्रस्य प्रणवश्चतुर्दशस्वरोविन्दुसंयुतः ॥ १ ॥

कालिकापुराणे मंत्रस्य सेतुकारणे उक्तत्वात् । तत इन्द्रादीन् वज्रादींश्च पूर्ववत् संपूज्य धूपादिविसर्जनान्तं कर्म्म समापयेत् । अस्य पुरश्चरणजपः षोडशसहस्रसंख्यः । तथाच—

यथाविधि जपेन्मन्त्रं वसुयुग्मसहस्रकम् ।
साज्येनान्नेन जुहुयात्तद्दशांशमनन्तरम् ॥ १ ॥

अयं मन्त्रः प्रणवादिरष्टादशाक्षरैः श्रीबीजादिर्वा तथाच मायां विना प्रणवादिः कामादिः श्रीबीजादिर्वाग्भवादिश्च सप्तदशाक्षरः । कवचे तथा प्रतिपादनात् । विशेषस्तु—

यद्यद्बीजादिको मन्त्रस्तेनैवाङ्गस्य कल्पना ।

अथ त्रिपुटामन्त्राः—

श्रीमायामदनैः प्रोक्तो मन्त्रो बीजत्रयात्मकः ।

अस्य पूजाप्रयोगः—

प्रातःकृत्यादि पीठन्यासान्तं भुवनेश्वरीमन्त्रोक्तजपादिपीठमन्वतं विन्यस्य ऋष्यादिन्यासं कुर्य्यात् । शिरसि—सम्मोहनऋषये नमः । मुखे-गायत्रीछन्दसे नमः । हृदि त्रिपुटायै देवतायै नमः । तथाच—

ऋषिः सम्मोहनश्छन्दो गायत्री देवता स्मृता ।

ततः कराङ्गन्यासौ—श्रीं अङ्गुष्ठाभ्यां नमः । ह्रीं तर्ज्जनीभ्यां स्वाहा । क्लीं मध्यमाभ्यां वौषट् । श्रीं अनामिकाभ्यां हुं । ह्रीं कनिष्ठाभ्यां वौषट् । क्लीं करतलकरपृष्ठाभ्यां फट् । एवं श्रीहृदयाय नम इत्यादि । तथाच निबन्धे—त्रिपुटाख्याद्विरुक्तैर्बीजैरङ्गानि षट्क्रमात् ।

ततो ध्यानम्—पारिजातवने रम्ये मण्डपे मणिकुट्टिमे ।
रत्नसिंहासने रम्ये पद्मे षट्कोणशोभिते ॥
अधस्तात् कल्पवृक्षस्य निषण्णां देवतां स्मरेत् ॥ १ ॥
चापं पाशाम्बुजसरसिजान्यं कुशं पुष्पबाणान्
सम्बिभ्राणां करसरसिजै रत्नमौलिं त्रिनेत्राम् ॥
हेमाब्जाभां कुचभरनतां रत्नमञ्जीरकाञ्चीम्
ग्रैवेयाद्यैर्विलसिततनुं भावयेच्छक्तिमाद्याम् ॥ २ ॥
चामरादर्शताम्बूलकरण्डकसमुद्गकान् ।
वहन्तीभिः कुचार्त्ताभिर्दूतीभिः परिवारिताम् ॥
करुणामृतवर्षिण्या पश्यन्तीं साधकं दृशा ॥ ३ ॥

अम्बुजं पद्मं न तु शंखम्, 'दधतींपद्मयुगलम्' इति दक्षिणामूर्ति-

वचनात् । एवं ध्यात्वा मानसैः सम्पूज्य शंखस्थापनं कुर्य्यात् । ततः सामान्योक्तपीठपूजां विधाय केशरेषु भुवनेश्वरीजयादिपीठमन्वन्तं सम्पूज्य पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरण-पूजां कुर्यात् । तद्यथा-अग्न्यादिकोणेषु-ॐ लक्ष्म्यै नमः । एवं हरये नमः । गौर्य्यै शिवाय, रत्यै कामाय षट्कोणस्योभयपार्श्वयोः- ॐ शंखनिधये नमः । ॐ पद्मनिधये नमः । ततः केशरेष्वग्न्यादिकोण-चतुष्टयेषु मध्ये दिक्षु च श्रीं हृदयाय नमः इत्यादिना षडङ्गानि पूजयेत् । पत्रेषु ब्राह्मयाद्या मातरः पूज्याः ।

तथाच निबन्धे—अग्न्यादिषट्कोणेषु लक्ष्म्याद्याः पूजयेद्ध्रुवम् ।

लक्ष्मीं हेमप्रभां तन्वीं वरदाब्जयुगाभयाम् ॥ १ ॥
शंखचक्रगदाम्भोजधरं हेमनिभं हरिम् ।
पाशाङ्कुशभयाभीष्टधरां गौरीं जपारुणाम् ॥ २ ॥
मृगटङ्काभयाभीष्टधरं स्वर्णनिभं हरम् ।
नीलोत्पलधरां सौम्यां रतिं काञ्चनसन्निभाम् ॥ ३ ॥
धृतपाशांकुशेष्वासंपुष्पेषुमरुणं स्मरन् ।
पूर्ववन्निधियुग्मं तु यजेदुभयपार्श्वयोः ॥
बहिरङ्गानि संपूज्य पूज्याः पत्रेषु मातरः ॥ ४ ॥ इति

तद्बहिः-इन्द्रादिन्वनितारूपान् पूजयेत् ।

तथा निबन्धे—लोकेशान् वनितारूपान्न अर्च्चयेत्सौम्यविग्रहान् ।

ततो धूपदीपादिविसर्जनान्तं कर्म्म समापयेत ॥ अस्य पुरश्चरण-जपो द्वादशलक्षः ।

तथाच—भानुलक्षं जपेदेनं मनुं तावत्सहस्रकम् ।
बिल्वारग्वधसम्भूतैर्म्मधुराक्तैः समिद्वरैः ॥
जपापुष्पैः प्रजुहुयात्तोषयेद्वसुना गुरुम् ॥ १ ॥

आरग्वधःस्योनालुः ।(१)

अयं मन्त्रस्त्रिविधः—परादिर्वा भवेद्देवि ! कामादिर्वा भवेदियम् ।
इति दक्षिणामूर्तिसंहितावचनात् । अथ त्वरिता मन्त्राः—
अथाभिधास्ये त्वरितां त्वरितं फलदायिनीम् ।
तारो माया वर्म्म बीजं ऋद्धिरीशस्वरान्विता ॥१॥
कूर्म्मस्तदन्त्यो भगवान् वस्त्री दीर्घतनुच्छदाम् ॥
संवर्तो भगवान्माया फडन्तो द्वादशाक्षरः ॥ २ ॥

तारः—प्रणवः, माया भुवनेश्वरी, वर्म्म—हुं, ऋद्धिःखकारः । ईश

(१) गिरिमाळापश्चिमदेशे विख्यातः ।

एकारः । कूर्म्मश्चकारः ।तदन्त्यच्छकारः तद्युक्तः । वह्निस्वरूपम् । दीर्घतनुच्छदं हूं संवर्तःक्षकारः,भग एकारस्तद्युक्तः ।

अस्याऽर्जुनऋषिर्विराट् छन्दस्त्वरिता देवता पुरुषार्थचतुष्टये सिद्ध्यर्थे जपे विनियोगः ।

तथाच निबन्धे—मुनिरर्ज्जुन आख्यातो विराट् छन्द उदीरितम् ।
त्वरिता देवता प्रोक्ता पुरुषार्थं फलप्रदा ॥ १ ॥

अस्याः पूजापद्धतिः—

प्रातःकृत्यादिपीठन्यासान्तं कर्म्म समाप्य केशरेषु जयादिपीठशक्तिविन्यस्य मध्ये क्षं हुं हं वज्रदेह घुरु २ हिङ्गुलु २ गर्ज्ज २ हं हुंक्षांपञ्चाननाय नमः, इति न्यसेत् । तथा च निबन्धे—

संवर्तो बिन्दुसंयुक्तः कवचं सकलं वियत् ।
वज्रदेहं घुरुद्वन्द्वमाभाष्य हिंगुलुद्वयम् ॥ १ ॥
गर्ज्जं गर्ज्जं वियत्सेन्दुर्वर्मान्त्यो दीर्घबिन्दुमान् ॥
पञ्चाननाय हृदयं पीठमन्त्रःप्रकीर्तितः ॥ २ ॥

तत ऋष्यादिन्यासः—

शिरसि अर्जुनऋषये नमः । मुखे-विराट्छन्दसे नमः । हृदि-त्वरितायै देवतायै नमः ।

ततो मन्त्रन्यासः—

मूर्द्धि ॐ नमः । भाले हं नमः । गले खें नमः । हृदि चं नमः । नाभौ छें नमः । गुह्ये क्षं नमः । ऊर्वोः स्त्रीं नमः । जानुनोः हूं नमः । जङ्घयोः क्षें नमः । पदद्वन्द्वे फट् नमः । ततो मूलेन व्यापकं कुर्य्यात् ।

तथा च निबन्धे—मायाविवर्ज्जितान् वर्णान् मूर्द्धि भाले गले हृदि ।
नाभिगुह्योरुयुग्मेषु जानुजंघापदेषु च ।
विन्यस्य व्यापकं कुर्य्यात्समस्तेनैव साधकः ॥ २ ॥

अतः कराङ्गन्यासौ । यथा—

चछे अङ्गुष्ठाभ्यां नमः । छेक्ष तर्जनीभ्यां स्वाहा । क्षस्त्री मध्यमाभ्यां वषट् । स्त्रीहूं अनामिकाभ्यां हुं । हुंक्षेकनिष्ठाभ्यां वौषट् । क्षेफट् करतलकरपृष्ठाभ्यां फट् । एवं चछे हृदयाय नमः । इत्यादि ।

तथाच निबन्धे—कुर्म्माद्यैः सप्तभिर्वर्णैः पूर्वपूर्वविवर्जितैः ।
द्वाभ्यां द्वाभ्यां षडङ्गानि कुर्य्यात्साधकसत्तमः ॥ १ ॥

ततो ध्यानम्—श्यामां बर्हिकलापशेखरयुतामाबद्धपर्णांशुकां—
गुञ्जाहारलसत्पयोधरनतामष्टाहिवान् बिभ्रतीम् ॥
ताटङ्काङ्गदमेखलां गुणरणन्मञ्जीरतां प्रापितान्

कैरातीं वरदाभयोद्यतकरां देवीं त्रिनेत्रां भजे ॥ १ ॥

एवं ध्यात्वा मानसैः संपूज्य शंखस्थापनं कुर्य्यात् । ततः सामान्योक्तपीठपूजां विधाय पद्मस्य केशरेषु पूर्वादिक्रमेण ॐ जयायै । ॐ विजयायै । ॐ अजितायै । ॐ अपराजितायै । ॐ नित्यायै । ॐ विलासिन्यै । ॐ दोग्ध्यै । ॐ अघोरायै । ॐ मङ्गलायै । नमः सर्वत्र । मध्ये-ह्रंहंहुंवज्रदेह घुरु २ हिङ्गुलु २ गर्ज २ हंहुंक्षंपंचाननाय नमः । ततः पूर्ववद्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजामारभेत् । अग्न्यादिकेशरेषु चछे गायत्र्यै हृदयाय नमः । छेक्ष गायत्र्यै शिरसे स्वाहा । क्षस्त्री गायत्र्यै शिखायै वषट् । स्त्रीहुं गायत्र्यै कवचाय हुं । हुं त्ते गायत्र्यै नेत्रत्रयाय वौषट् । दिक्षु त्तेफट् गायत्र्यै अस्त्राय फट् ।

तथाच निबन्धे--

अङ्गैः प्रणीतां गायत्रीं केशरेष्वर्चयेत्क्रमात् ।
दलेषु पूजयेदेताः श्रीबीजाद्याः सुभूषिताः ॥ १ ॥
हुंकारीं खेचरीं चण्डां छेदिनीं क्षपणीं स्त्रियम् ।
हूंकारीं त्तेमकारीं च लोके सायुधभूषणाम् ॥
फट्कारीमग्रतोऽवाह्य कोदण्डशरधारिणीम् ॥२॥

वाक्यं तु ह्रींहुंकार्य्यै नमः । इत्यादिबाह्ये । अग्रतः—ॐ फट्कारिण्यै नमः । द्वारस्योभयपार्श्वयोः--ॐ जयायै नमः । एवं विजयायै नमः । तद्बाह्ये—किङ्कराय रक्ष रक्ष त्वरिताज्ञा स्थिरो भव हुं फट्' इति मंत्रेण पूजयेत् ।

तथाच निबन्धे—

द्वारस्य पार्श्वयोः पूज्ये हैमवेत्रकराम्बुजे ।
जयाख्या विजयाख्या च किंकराय पदं ततः ॥ १ ॥
रक्ष रक्ष पदस्यांते त्वरिताज्ञा स्थिरो भव ।
वर्मास्त्रांतेन मनुना किंकरं तद्बहिर्यजेत् ॥ २ ॥
न गुडं विभ्रतं कृष्णं कृष्णचर्चरमूर्द्धजम् ।
आरण्यैः वरुणैः पुष्पैरतिरक्तैः सुगन्धिभिः ।
पूजयेद्धूपदीपाद्यैर्नृत्यगीतैर्महोत्सवैः ॥ ३ ॥

अत्र नेन्द्रादिपूजा अनुक्तत्वात् । ततो धूपादिविसर्जनान्तं कर्म्म समापयेत् । अस्य पुरश्चरणजपो लक्षसंख्यः । तद्दशांशं बिल्वसमिद्भिस्त्रिमध्वक्तैर्होमयेत् । तथाच—

लक्षं संजप्य मंत्रज्ञो मन्त्रमेनं जितेन्द्रियः ।
तद्दशांशं जुहुयाद्बिल्वैस्त्रिमध्वक्तैः समिद्वरैः ॥ १ ॥

अथ नित्या मन्त्राः—

वाग्भवं कामबीजं च नित्यक्लिन्ने पदौ पुनः।
द्रवे वह्निवधूर्म्मन्त्रो(१)द्वादशार्णोयमीरितः॥ १॥

अस्य पूजाप्रयोगः—

प्रातःकृत्यादिपीठन्यासान्तं कर्म्म समाप्य केशरेषु मध्ये पूर्वादिक्रमेण जयादि ह्रीं आधारशक्तिकमलासनाय नमः इत्यन्तं विन्यस्य ऋष्यादिन्यासं कुर्य्यात्। तद्यथा—शिरसि सम्मोहनऋषये नमः। मुखे निवृच्छिछंदसे नमः। हृदि नित्यायै देवतायै नमः। ततः कराङ्गन्यासौ-ऐं अंगुष्ठाभ्यां नमः। ऐं तर्ज्जनीभ्यां स्वाहेत्यादि। एवं ऐं हृदयाय नमः। इत्यादि हृदयादिषु न्यसेत्। तथाच निबन्धे—

वाचां कृत्वा षडङ्गानि नित्यां ध्यायेद्यथाविधि॥

ततो ध्यानम्—

अर्द्धेन्दुमौलिमरुणाममराभिवन्द्या-
मम्भोजपाशसृणिपूर्णकपालहस्ताम्॥
रक्ताङ्गरागवसनाभरणां त्रिनेत्रां
ध्यायेच्छिवस्य वनितां मदविह्वलाङ्गीम्॥ १॥

एवं ध्यात्वा मानसैः सम्पूज्य शंखस्थापनं कुर्य्यात्। ततः पीठपूजां विधाय केशरेषु जयादिपीठशक्तिं संपूज्य मध्ये ह्रीं आसनाय नमः इति संपूज्य पुनर्ध्यात्वावाहनादिकं च पुष्पांजलिदानपर्य्यंतं विधायावरणपूजामारभेत्। तद्यथा—अग्न्यादिकोणेषु मध्ये दिक्षु च—ऐं हृदयाय नम इत्यादिना पूजयेत्। ततोऽष्टपत्रेषु-ॐनित्यायै। एवं निरञ्जनायै। क्लेदिन्यै। क्लिन्नायै। मदनातुरायै। मदद्रवायै। द्राविण्यै। द्रविण्यै सर्वत्र नमोऽन्तेन पूजयेत्। तथाच निबन्धे—

नित्या निरञ्जना क्लिन्ना क्लेदिनी मदनातुरा।
मदद्रवा द्राविणी च द्रविणीत्यष्ट शक्तयः॥
नीलोत्पलकपालाढ्या करैरक्ताम्बुजप्रभा॥१॥ इति।

तद्बाह्ये इन्द्रादीन् वज्रादींश्च पूजयेत्। ततो धूपादिविसर्ज्जनान्तं कर्म्म समापयेत्। अस्य पुरश्चरणं चतुर्लक्षजपः।

तथाच—चतुर्लक्षं जपेन्मन्त्रं मधुराक्तैर्म्मधूकजैः।
कुसुमैरयुतं हुत्वा तोषयेद्गुरुमात्मनः॥ १॥

---

(१) 'ऐं क्लीं नित्यक्लिन्ने मदद्रवे स्वाहा' इति मन्त्रः।

## अथ वज्रप्रस्तारिणीमन्त्राः ।

वाङ्मायानन्तरं नित्यक्लिन्ने भूयो मदद्रवे(१) ।
स्वाहान्तोरविसंख्यार्णो मन्त्रोऽवश्यप्रदायकः ॥

अस्य पूजायन्त्रम्—षट्कोणं द्वादशदलं चतुर्द्वारं चतुरस्रं च ।

अस्य पूजाप्रयोगः—प्रातःकृत्यादिपीठन्यासान्तं कर्म्म विधाय केशरेषु जयादिपीठमन्वन्तं विन्यस्य ऋष्यादीन्यासं कुर्य्यात् ।

यथा—शिरसि अङ्गिरसे ऋषये नमः । मुखे त्रिष्टुपूछंदसे नमः । हृदि वज्रप्रस्तारिण्यै देवतायै नमः ।

तथाच निबन्धे--अङ्गिराश्च ऋषिस्त्रिष्टुपूछन्दोमुनिभिरीरितम् ।
वज्रप्रस्तारिणी प्रोक्ता देवताभीष्टदायिका ॥ १ ॥

ततः कराङ्गन्यासौ—ऐं अङ्गुष्ठाभ्यां नमः । ऐं तर्ज्जनीभ्यां स्वाहा । इत्यादि । एवं हृदयादिषु ऐं हृदयाय नम इत्यादि ।

तथाच निबन्धे—वाग्भवेन षडङ्गानि विदध्यान्मन्त्रवित्तमः ।

ततो ध्यानम्—

रक्ताब्धौ रत्नपोतेरविदलकमलाभ्यन्तरे सन्निषण्णां
रक्ताङ्गी रत्नमौलिस्फुरितशशिकलां स्मेरवक्त्रां त्रिनेत्राम् ॥
बीजाङ्कुरेषु पाशांकुशमदनधनुःसत्कपालानि हस्तै—
र्बिभ्राणामानताङ्गीं स्तनभरनमितामम्बिकामाश्रयामः ॥ १ ॥

एवं ध्यात्वा मानसैः सम्पूज्य शंखस्थापनं कृत्वा पूर्ववत्पीठपूजां विधाय पुनर्ध्यात्वाहनादिपंचपुष्पांजलिदानपर्य्यंतं विधायावरणपूजामारभेत् । अग्न्यादिकोणेषु मध्ये दिक्षु च ऐं हृदयाय नम इत्यादिना सम्पूज्य द्वादशदले पूर्वादिक्रमेण ॐहृल्लेखायै नमः । एवं क्लेदिन्यै, क्लिन्नायै, क्षोभिण्यै, मदनातुरायै, निरञ्जनायै, रागवत्यै, मदनावत्यै, मेखलायै, द्राविण्यै, वेगवत्यै, स्मरायै, सर्वत्र प्रणवादिनमोन्तेन पूजयेत् ।

तथाच निबन्धे—

हृल्लेखा क्लेदिनी क्लिन्ना क्षोभिणी मदनातुरा ।
निरञ्जना रागवती सप्तमी मदनावती ॥
मेखला द्राविणी पश्चाद्वेगवत्यपरा स्मरा ॥१॥ इति ।

तद्बाह्ये-ब्राह्म्यादिमातृकाः पूजयेत् । तद्बहिरिन्द्रादीन् वज्रादांश्च पूजयेत् ।

तथाच निबन्धे—मातरो दिग्विदिक्षु च चर्य्याः पुनः पूज्या दिगीश्वराः ।

---

(१) ऐं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा' इति मन्त्रः ॥ ३ ॥

ततो धूपादिविसर्जनान्तं कर्म्म समापयेत् । अस्य पुरश्चरणं लक्षजपः।
तथाच—मन्त्रं मन्त्री जपेल्लक्षं जपान्ते जुहुयात्ततः ।
अयुतं राजवृक्षोत्थैर्घृतसिक्तैः समिद्वरैः ॥ १ ॥
राजवृक्षः-श्योनाकुः ॥

---

## अथ दुर्गामन्त्राः ।

अथ दुर्गामनून् वक्ष्ये दृष्टादृष्टफलप्रदान् ।
मायारिःकर्णबिन्द्वाढ्यो भूयोऽसौ स्वर्गवान्भवेत् ॥ १ ॥
पंचान्तकः प्रतिष्ठावान् मारुतो भौतिकासनः ।
तारादिहृदयान्तोऽयं (१)मन्त्रोवस्वक्षरात्मकः ॥
तारो माया स्वबीजं च दुर्गायै हृदयं ततः ॥ २ ॥

अर्द्दकारः, कर्णउकारः, पञ्चान्तको—गकारः, प्रतिष्ठा—आकारः, मारुतो यकारः, भौतिकः—ऐकारः,

अस्य पूजाप्रयोगः—प्रातःकृत्यादि पीठन्यासान्तं विधाय केशरेषु मध्ये च पीठशक्तीर्न्यसेत् । तद्यथा-आं प्रभायै, ईं मायायै, उं जायायै; एं सूक्ष्मायै; ऐं विशुद्धायै, ओं नंदिन्यै, औं सुप्रभायै, अं विजयायै, अः सर्वसिद्धिदायै, नमः सर्वत्र । तदुपरि—वज्रनखदंष्ट्रायुधाय महासिंहासनाय हूं फट् नमः इति न्यसेत् ।

तथाच निबन्धे—प्रभा माया जया सूक्ष्मा विशुद्धा नंदिनी पुनः ।
सुप्रभा विजया सर्वसिद्धिदा नवशक्तयः ॥ १ ॥

ततः ऋष्यादिन्यासः, तद्यथा—शिरसि नारदऋषये नमः, मुखे—गायत्रीछन्दसे नमः, हृदि—दुर्गायै देवतायै नमः ।

तथाच निबन्धे-ऋषिःस्यान्नारदः छन्दो गायत्री देवताः मनोः ।
दुर्गा सा गीरिता सद्भिर्दूरितापनिवारिणी ॥ १ ॥ इति ।

ततः कराङ्गन्यासो-ह्रां ॐ ह्रीं दुं दुर्गायै अंगुष्ठाभ्यां नमः । ह्रीं ॐ ह्रीं दुं दुर्गायै तर्जनीभ्यां स्वाहा । ह्रूं ॐ ह्रीं दुं दुर्गायै मध्यमाभ्यां वषट् । ह्रै ॐ ह्रीं दुं दुर्गायै अनामिकाभ्यां हुं । ह्रौं ॐ ह्रीं दुं दुर्गायै कनिष्ठाभ्यां वौषट् । ह्रः ॐ ह्रीं दुं दुर्गायै करतलपृष्ठाभ्यां फट् । एवं हृदयादिषु-ह्रां ॐ ह्रीं दुं दुर्गायै हृदयाय नमः इत्यादि ।

तथाच निबन्धे—नमस्कारविमुक्तेन मूलमन्त्रेण साधकः ।
ह्रामाद्यैः सह कुर्वीत षडङ्गानि यथाविधि ॥ १ ॥

---

(१) ॐ ह्रीं दुं दुर्गायै नमः ।

आगमकल्पद्रुमे—नमस्थाने च दीर्घाढ्यशक्तिबीजं नियोजयेत् ।
षडङ्गानि विधेयानि मूलमन्त्रेण साधकः ॥ १ ॥

इतिवचनात् ॐ ह्रीं दुं दुर्गायै ह्रां अंगुष्ठाभ्यां नम इत्याद्यपि वदन्ति ।

ततो ध्यानम्—सिंहस्थाशशिशेखरामरकतप्रख्याचतुर्भिर्भुजैः
शंखं चक्रधनुः शरांश्च दधती नेत्रैस्त्रिभिः शोभिता ।
आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीक्वणन्नूपुरा
दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुण्डला ॥ १ ॥

एवं ध्यात्वा मानसैः सम्पूज्य शंखस्थापनं कुर्यात् । ततः पीठपूजां कृत्वा केशरेषु मध्येषु च-आं प्रभायै, ईं मायायै, ऊं जयायै, एं सुस्मायै, ऐं विशुद्धायै, ओं नन्दिन्यै, औं सुप्रभायै, अं विजयायै, अः सर्वसिद्धिदायै, तदुपरि वज्रनखदंष्ट्रायुधाय महासिंहाय हुं फट् नमः इति पूजयेत् ।

तथाच निबन्धे—अत्रिहस्वत्रयक्लीबरहितैः पूजयेदिमाः ।
प्रणवानन्तरं वज्रनखदंष्ट्रायुधाय च ॥ १ ॥
महासिंहाय वर्म्मास्त्रं नतिः सिंहमनुर्म्मतः ।
दद्यादासनमेतेन मूर्तिं मूलेन कल्पयेत् ॥ २ ॥

ततः पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजामारभेत् । तद्यथा—

अग्निनिर्ऋतिवाय्वीशानकोणेषु मध्ये दिक्षु च-ह्रां ॐ ह्रीं दुर्गायै हृदयाय नम इत्यादिना पूजयेत् ।

ततः पत्रेषु—जं जयायै, विं विजयायै, किं कीर्त्यै, प्रां प्रीत्यै, प्रं प्रभायै, श्रं श्रद्धायै मं मेधायै, धुं धृत्यै । तथा च निबन्धे—
जया च विजया कीर्तिः प्रीतिः पश्चात्प्रभा पुनः ।
श्रद्धा मेधा धृतिः प्रोक्ताः स्वनामाद्यक्षरादिकाः ॥१॥

पत्राग्रेषु-ॐ शंखाय नमः । एवं चक्राय, गदायै, खङ्गाय, पाशाय, अंकुशाय, चापाय, शराय । प्रणवादिनमोन्तेन पूजयेत् ।

तद्बाह्ये—इन्द्रादीन् वज्रादींश्च पूजयेत् । ततो धूपादिविसर्ज्जनान्तं कर्म्म समापयेत् । अस्य पुरश्चरणमष्टलक्षजपः ।

तथाच—वसुलक्षं जपेन्मन्त्रं तिलैर्म्मधुरलोडितैः ।
पयोऽन्धसा वा जुहुयात्तत्सहस्रं जितेन्द्रियः ॥ १ ॥

तेन वाचनिकोऽष्टसहस्रहोमः ।

---

## अथ महिषमर्दिनीमन्त्राः ।

शारदायाम्—भान्तं वियत्सनयनं श्वेतो मर्द्दिनिठद्वयम् ।
अष्टाक्षरी समाख्याता विद्या(१)महिषमर्द्दिनी ॥ १ ॥

नारायणीतन्त्रे—
विषं हि मज्जाकालोग्निरत्रिरिस्थो निठद्वयम् ।
अष्टाक्षरी समाख्याता विद्या महिषमर्द्दिनी ॥ १ ॥

विषम्—मकारः, हि-स्वरूपं, मज्जा-षकारः, कालो, मकारः, अग्निरेफः, अत्रिः-दकारः, इस्थ ईकारः इस्थ कः, षचनादिकारयुक्ता दकारः । अयं मन्त्रस्तारादिर्म्मायादि च, अत्रिः-दकारः, इति कामादिर्वाग्भवादिर्वधूबीजादिः कवचादिवाग्भयादिश्चैवाक्षरः ।

तथाच विश्वसारे—प्रणवाद्यां जपेद्विद्यां मायाद्यां वा जपेत्सुधीः ।
वधूबीजादिकां वापि कवचाद्यां जपेत्तथा ॥ १ ॥
सर्वकालेषु सर्वत्र कामाद्यां प्रजपेत्सुधीः ।
वाग्भवाद्यां जपेत्तां तु देवीं वाक्यविशुद्धये ॥ २ ॥
विना बीजैर्म्महाविद्या निर्वीर्य्या परिकीर्त्तिता ।
पुटिता बीजयुग्मेन मुखे युग्मकदेशके ॥ ३ ॥
दशाक्षरी समानास्ति विद्या त्रिभुवनेश्वरी ।
प्रणवं च तथा माया भवेद्विद्यापुनर्दश ॥
कामं प्रणवमित्युक्तं भवेद्विद्या पुनर्दश ॥ ४ ॥

अस्य पूजाप्रयोगः—

प्रातःकृत्यादिपीठन्यासान्तं विधाय केशरेषु मध्ये दुर्गामन्त्रोक्तपीठशक्तीः पीठमनुं च न्यसेत् । ततः पूर्वोक्तऋष्यादिन्यासं च कृत्वा कराङ्गन्यासौ कुर्य्यात् ।

तद्यथा—

महिषहिंसिके हूं फट् अंगुष्ठाभ्यां नमः । महिषशत्रोशार्वि हुं फट् तर्ज्जनीभ्यां स्वाहा । महिषं हेषय हेषय हूं फट् अनामिकाभ्यां हुं । महिषं हन हन मध्यमाभ्यां वौषट् । महिषसूदिनि हुं फट् कनिष्ठाभ्यां नमः अस्त्राय फट् । एवं हृदयाय नम इत्यादि ।

तथाच निषेधे—महिषहिंसिके हुं फट् हृदयं परिकीर्तितम् ।
महिषशत्रोशार्विहुं फट् शिर उदीरितम् ॥ १ ॥
महिषं हेषय द्वन्द्वं हुं फडंतः शिखामनुः ।
महिषं हनयुग्मान्ते देवीं हुंफट् तनुच्छदम् ॥

---

(१) महिषमर्द्दिनि स्वाहा इति मन्त्रः ।

महिषान्ते सूदिनि हुं फडन्तंह्यसमीरितम् ॥ २ ॥

अथ ध्यानम्—गारुडोपलसन्निभां मणिमयमुकुटमण्डितां
नौमि भालविलोचनां महिषोत्तमाङ्गनिषेदुषीम् ॥
शंखचक्रकृपाणखेटकबाणकार्मुकशूलकाम्
तर्ज्जनीमपि बिभ्रती निजबाहुभिः शशिशेखराम् ॥१॥

एवं ध्यात्वा मानसोपचारैः संपूज्य शङ्खस्थापनं(१) कृत्वा पीठपूजां विधाय केशरेषु मध्ये च पीठशक्तीः पीठमनुं यजेत। पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यंतं विधायावरणपूजामारभेत् ॥

अग्न्यादिकोणेषु पूर्ववदङ्गं पूजयेत्। ततः पत्रेषु पूर्वादि-आं दुर्गायै नमः। ईं वरवर्णिन्यै नमः, ऊं आर्य्यायै नमः, एवं ॠं कनकप्रभायै, ॡं कृतिकायै, ऐं अभयप्रदायै, औं कन्यायै, अः सुरूपायै।

तथाच तन्त्रान्तरे—आदौ दुर्गां ततो वरवर्णिनीमार्य्यकाह्वयाम्।
कनकप्रभिकाञ्चैवपू कृतिकामभयप्रदाम् ॥
कन्यां चैव सुरूपां च यजेत्पूर्वादि तत्क्रमात् ॥१॥

दीर्घाभ्यत्वमेतासान्तु—अष्टपत्रे यजेद्देवीं दुर्गाद्या दीर्घपूर्विकाः।
इति मन्त्रचूडामणिनोक्तत्वात्। 'दीर्घाक्षरैश्च क्रमाद्'इतिशारदावचनात्॥

पत्राग्रेषु-यं चक्राय, रं शंखाय, लं खड्गाय, वं खेटकाय, शंबाणाय, षं धनुषे, सं शूलाय, हं तर्ज्जन्यै। नमः सर्वत्र।

तथाच निबन्धे—यजेदग्रेष्वायुधानि चक्रशंखासिखेटकान्।
बाणं बाणासनं शूलं तर्ज्जनीयादिभिः क्रमात् ॥ १ ॥

पत्राग्रेषु ब्राह्म्याद्याः पूजयेत्। ततो दिक्षु तद्बहिरिन्द्रादीन् वज्रादींश्च पूजयेत्। ततो धूपादिविसर्जनान्तं कर्म्म समापयेत्।

तथाच कूलचूडामणौ—ब्राह्म्याद्याश्च ततः पश्चाल्लोकपालास्ततो बहिः।
तदस्त्राणि सिद्धमन्त्री प्रयोगं च समाचरेत् ॥१॥

अस्य पुरश्चरणमष्टलक्षजपः। अष्टसहस्रं तिलैर्होमः।

तथाच—
अष्टलक्षं जपेन्मन्त्रं तत्सहस्रं तिलैः शुभैः।

---

(१) अत्र शंखनिषेधो विश्वसारे—
कालीवत्पूजयेद्देवीं कालीवत्फलमाप्नुयात्।
न वैष्णवैर्यजेद्देवीं न तुला स्यात्कदाचन ॥
न शंखेनार्घ्यपात्रं स्यात्कथितं पद्मयोनिना।
विश्वामित्रस्य पात्रेण मृदा वापि शिवां यजेत्। इति ॥

इत्यादिवचनात् । जपसमर्पणात्पूर्वमुत्तरस्यां दिशि त्रिकोणं मण्डलं विलिख्य बलिं दद्यात् ।

एहि एहि पदद्वन्द्वं गृह्ण गृह्ण पदद्वयम् ।
मदीयं च बलिं देवि ! लुलायकपदद्वयम् ॥ १ ॥
साधयद्वितयं ब्रूयात् खादयद्वितयं पुनः ।
सर्वसिद्धिपदं सेहि ततः स्वाहापदं वदेत् ।
बलिदानस्य मन्त्रोऽयं मर्दिन्याः परिकीर्तितः ॥२॥

---

## अथ जयदुर्गामन्त्रः ।

तारो दुर्गे युगं रक्ष मान्त्यो ढोन्तं सलोचनम् ।
द्विठान्ता जयदुर्गेयं विद्या वेद्या(१) दशाक्षरी ॥

अस्य पूजाप्रयोगः—

प्रातःकृत्यादि दुर्गामन्त्रोक्तऋष्यादिन्यासान्तं कर्म्म कृत्वा कराङ्गन्यासौ कुर्य्यात् ।

यथा—

ॐ दुर्गे अंगुष्ठाभ्यां नमः । ॐ दुर्गे तर्जनीभ्यां स्वाहा । ॐ दुर्गे मध्यमाभ्यां वषट् । ॐ भूतरक्षणि अनामिकाभ्यां हुं । ॐ दुर्गे दुर्गे रक्षणि कनिष्ठिकाभ्यां वौषट् । ॐ दुर्गे दुर्गे रक्षणि करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिषु ।

तथाच निबन्धे—तारादिदुर्गे हृदयं दुर्गे च शिर ईरितम् ।
दुर्गायै स्याच्छिखावर्म्म भूतरक्षणि कीर्तितम् ॥
तारादिदुर्गे द्वितयं रक्षणयस्त्रमुदाहृतम् ॥ १ ॥

ततो ध्यानम्—

कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुरेखां
शंखं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम् ।
सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं
ध्यायेद्दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धसंघैः ॥१॥

एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनं कुर्य्यात् । ततः पूर्वोक्तपीठपूजां विधाय पूर्ववत् पूजां कुर्य्यात् । अस्य पुरश्चरणं पञ्चलक्षजपः । घृतेन दशांश होमः ।

तथाच निबन्धे—बाणलक्षं जपेन्मन्त्रं घृतेन जुहुयात्ततः ।

---

(१) ॐ दुर्गे दुर्गे रक्षिणी स्वाहा इति मन्त्रः ।

दशांशं संस्कृते वन्हौ ब्राह्मणानपि भोजयेत् ।
अष्टाक्षरोदिते पीठे पूजयेत्पूर्व्ववत्सुधीः ॥ १ ॥

## अथ शूलिनीमन्त्राः ।

ज्वल ज्वल पदस्यान्ते शूलिनीति पदं ततः ।
दुष्टाग्रहहुमस्त्रान्ते(१) वह्निजायावधिर्म्मनुः ॥
भूतेन्द्रियाक्षरैः प्रोक्तो ग्रहक्षुद्राविनाशकृत् ॥ १ ॥

अस्य पूजाप्रयोगः—

प्रातःकृत्यादि दुर्गामन्त्रोक्तपीठन्यासान्तं कर्म्म कृत्वा ऋष्यादिन्यासं कुर्य्यात् । शिरसि दीर्घतमसऋषये नमः । मुखे ककुपछन्दसे नमः । हृदि शूलिन्यै देवतायै नमः ।

तथाच निबन्धे—ऋषिर्दीर्घतमाः प्रोक्तः ककुपछन्द उदाहृतम् ।
शूलिनी देवता प्रोक्ता समस्तसुरवन्दिता ॥ १ ॥ इति ।

ततः कराङ्गन्यासौ कुर्य्यात् । शूलिनि दुर्गे हुं फट् अंङ्गुष्ठाभ्यां नमः । शूलिनि वरदे हुं फट् तर्ज्जनीभ्यां स्वाहा । शूलिनि विंध्यवासिनि हुं फट् मध्यमाभ्यां वषट् । शूलिन्यसुरमर्दिनि युद्धप्रिये अस्त्राय हुं फट् अनामिकाभ्यां हुम् । शूलिनि देवसिद्धप्रपूजिते नन्दिनि रक्ष रक्ष महायोगेश्वरि हुं फट् कनिष्ठिकाभ्यां वौषट् । एवं हृदयादिषु ।

तथाच निबन्धे—दुर्गे हृद्वरदे शीर्षं विंध्यवासिनि तच्छिखा ।
असुरान्ते मर्द्दिनी स्यात् युद्धपूर्वं प्रिये पुनः ॥ १ ॥
त्रासयद्वितयं वर्म्म देवसिद्धसुपूजिते ।
नन्दिनि स्याद्रक्षयुगं महायोगेश्वरि क्रमात् ।
शूलिन्याद्या हूं फडन्ताः पञ्चाङ्गमनवः क्रमात् ॥ २ ॥

ततो ध्यानम्—अध्यारूढां मृगेन्द्रं सजलजलधरश्यामलां हस्तपद्मैः
शूलं बाणं कृपाणीमरिजलजगदाचापपाशान्वहन्तीम् ।
चन्द्रोत्तंसां त्रिनेत्रां चतसृभिरसिना खेटकं बिभ्रतीभिः ।
कन्याभिः सेव्यकानां प्रतिभटभयदां शूलिनीं भावयामि ॥१॥

एवं ध्यात्वा मानसैः संपूज्यार्घ्यस्थापनं कुर्य्यात् । ततः पूर्वोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादि पंचपुष्पाञ्जलिदानपर्य्यन्तं कृत्वावरणदेवतापूजामारभेत् ।

तद्यथा—अग्निनिर्ऋतिवाय्वीशानकोणेषु विदिक्षु च ।

---

(१) ज्वल ज्वल शूलिनि दुष्टग्रह हुं हु फट् स्वाहा इति मन्त्रः ।

पूर्वोक्तानि पूजयेत् । ततः पत्रेषु पूर्वादि ॐ दुर्गायै नमः । एवं वरदायै, विन्ध्यवासिन्यै, असुरमर्दिन्यै, युद्धप्रियायै, देवसिद्धपूजितायै, नन्दिन्यै, महायोगेश्वर्य्यै । ततः पत्राग्रेषु तदस्त्राणि पूजयेत् ।
तथाच निबन्धे—विधाय पूजामङ्गानां पूज्या पत्रेषु शक्तयः ।

दुर्गाद्यावरदाविन्ध्यवासिन्यसुरमर्द्दिनी ॥ १ ॥
युद्धप्रिया पञ्चमी स्याद्देवसिद्धप्रपूजिता ।
सप्तमी नंदिनी प्रोक्ता महायोगेश्वरी परा ॥ २ ॥
दलाग्रेषु सहस्त्राणि शंखचक्रमसिं पुनः ।
गदेषु चापशूलानि पाशं पश्चाद्दिशोऽधिपान् ॥ ३ ॥
अस्य पुरश्चरणं पञ्चदशलक्षजपः ।

तथा च—मनुमेकं जपेन्मन्त्री वर्णलक्षं विचक्षणः ।
सर्प्पिषान्नेन वा होमस्तद्दशांशमितो भवेत् ॥ १ ॥
अथ वर्णमनुं वक्ष्ये विश्वबोधविधायिनीम् ।
यस्यामनुपलब्धायां सर्वमेतज्जगज्जडम् ॥ २ ॥

---

## अथ वागीश्वरीमन्त्राः ।

वदवदवाग्वादिनिवन्हिवल्लभेतिदशाक्षरः ।
तथाच निबन्धे—अत्रिर्वरुणसंरुद्धो द्वेवाग्वादिनिठद्वयम् ।
वागीश्वर्या दशार्णोऽयं वागैश्वर्य्यफलप्रदः ॥ १ ॥
अस्य यन्त्रम्—व्योमेन्दौरसनार्णकर्णिकमचां द्वंद्वैः स्फुरत्केशरं
पत्रान्तर्गतपञ्चवर्गयशलार्णादित्रिवर्गं क्रमात् ।
आशास्वस्त्रिपुलांतलांगलियुजाक्षोणीपुरेणावृतं
यन्त्रं वर्णतनोः परं निगदितं धर्मार्थसिद्धिप्रदम् ॥ १ ॥

अस्याः पूजाप्रयोगः । प्रातःकृत्यादि पीठन्यासान्तं कर्म्म विधाय केशरेषु मध्येषु च ॐमेधायै नमः । एवं उं प्रज्ञायै, ॐ प्रभायै, ॐ विद्यायै, ॐ मेधायै, ॐ धृत्यै, ॐ स्मृत्यै, ॐ बुद्ध्यै, ॐ विद्येश्वर्य्यै, मध्ये—वर्णपद्मासनाय; नमः सर्वत्र । तत ऋष्यादिन्यासः । तद्यथा—शिरसि कण्वऋषये नमः, मायापुटितश्चेत् बृहस्पतये नमः । मुखे विराट्छन्दसे नमः । हृदि वागीश्वर्य्यै देवतायै नमः । अथ मन्त्रन्यासः- शिरसि वं नमः, श्रवणयोः दं नमः, वं नमः । चक्षुषोः-दं नमः वाङ्नमः । नासिकयोः, वां नमः ग्वि नमः । वदनेनि नमः । लिङ्गे स्वां नमः; गुह्ये हां नमः, मातृकायाः कराङ्गन्यासौ कृत्वा ध्यायेत् ।

तथाच निबन्धे-शिरःश्रवणदृङ्नासावदनांघ्रिगुदेष्विमान् ।
न्यस्य वर्णान् षडङ्गानि मातृकोक्तानि कल्पयेत् ॥ १ ॥

ततो ध्यानम्—तरुणसकलमिन्दोर्बिभ्रतीशुभ्रकान्ति
कुचभरनमितांगीसन्निषण्णा सिताब्जे ।
निजकरकमलोद्यल्लेखनीपुस्तकश्रीः
सकलविभवसिद्धा पातु वाग्देवता नः ॥ १ ॥

एवं ध्यात्वा मानसैः संपूज्य शंखस्थापनं कुर्यात् । ततः पीठपूजां कृत्वा केशरेषु मध्ये च मेधादिपीठमन्वंतं संपूज्य पुनर्ध्यात्वावाहनादि-पञ्चपुष्पाञ्जलिदानपर्य्यंतं विधायावरणपूजामारभेत् । अग्निकोणेअं कं ५ आं हृदयाय नमः । नैर्ऋते इं चं ५ ईं शिरसे स्वाहा । वायुकोणे उं टं ५ ऊं शिखायै वषट् । ईशाने एं तं ५ ऐं कवचाय हुं । मध्ये ओं पं ५ औं नेत्रत्रयाय वौषट् । दिक्षु अं यं अः अस्त्राय फट् । ततः पत्रेषु पूर्वादि ॐ योगायै नमः । एवं सत्यायै, विमलायै, ज्ञानायै, बुध्यै, स्मृत्यै, मेधायै, प्रज्ञायै, दलाग्रेषु ब्राह्म्याद्या मातरः पूज्याः । तद्बहिरिंद्रादीन् वज्रादींश्च सम्पूज्य धूपादिविसर्ज्जनांतं कर्म्म समापयेत् । अस्य पुरश्चरणं दश-लक्षजपः ।

तथाच—दशलक्षं जपेन्मन्त्रं दशांशं जुहुयात्ततः ।
पुंडरीकैः पयोभ्यक्तैस्तिलैर्वा मधुराप्लुतैः ॥ १ ॥

अथ मन्त्रान्तरम्—हृदयान्ते भगवति वदशब्दयुगं ततः ।
वाग्देवि वह्निजायां तं वाग्भवाद्यं समुद्धरेत् ।
मनुः षोडशवर्णाढ्यो वागैश्वर्य्यफलप्रदः ॥ १ ॥

अस्य पूजाप्रयोगः—प्रातःकृत्यादि पीठन्यासान्तं कर्म्म विधाय केशरेषु मध्ये च पीठशक्तीः पीठमनुं च न्यसेत् । ततः पूर्वोक्तऋष्यादि-न्यासं कृत्वा करांगन्यासौ कुर्य्यात् । यथा-ऐं अंगुष्ठाभ्यां नमः, नमस्त-र्जनीभ्यां स्वाहा । भगवति मध्यमाभ्यां वषट् । वद वद अनामिकाभ्यां हुं । वाग्देवि कनिष्ठिकाभ्यां वौषट् । स्वाहा करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिषु ।

तथाच निबन्धे—मनोः षड्भिः पदैः कुर्य्याज्जातियुक्तं षडङ्गकम् ।

ततो ध्यानम्—शुभ्रां स्वच्छविलेपमाल्यवसनां शीतांशुखण्डोज्वलां
व्याख्यामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैः ।
बिभ्राणां कमलासनां कुचनतां वाग्देवतां सस्मिताम्
वंदे वाग्विभवप्रदां त्रिनयनां सौभाग्यसंपत्करीम् ॥ १ ॥

एवं ध्यात्वा मानसैः संपूज्य शंखस्थापनं कुर्य्यात् । ततः पूर्वोक्त-

मेण पूजयेत् । किन्त्वङ्गमन्त्रे विशेषः । अस्य पुरश्चरणमष्टलक्षजपः ।

तथा च—हविष्याशी जपेन्मन्त्रं वसुलक्षमनन्यधीः ।
दशांशं जुहुयादन्ते तिलैराज्यपरिप्लुतैः ॥ १ ॥

अथ मन्त्रान्तरमाह—तारो मायाऽधरो बिंदुः शक्तिस्तारः सरस्वती ।
ङेन्ता नत्यन्तिको मन्त्रः प्रोक्तश्चैकाद(१)शाक्षरः ॥ १ ॥

अस्य पूजाप्रयोगः—प्रातःकृत्यादि पूर्वोक्तपीठमन्वन्तं विन्यस्य पूर्वोक्तमृष्यादिन्यासं कुर्य्यात् । ततो मन्त्रन्यासः-ॐ नमो ब्रह्मरन्ध्रे, ह्रीं नमो भ्रूमध्ये, चक्षुषोः-ऐं नमः, ह्रीं नमः । नासिकायोः-रं नमः स्वं नमः । कर्णयोः-ॐ नमः सं नमः । मुखे-स्यै नमः । लिङ्गे-नं नमः । गुह्ये-मं नमः । ततः कराङ्गन्यासौ—ऐं अङ्गुष्ठाभ्यां नमः । ऐं तर्ज्जनीभ्यां स्वाहा ऐं मध्यमाभ्यां वषट् । ऐं अनामिकाभ्यां हुम् । ऐं कनिष्ठाभ्यां वौषट् । ऐं करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिषु-ऐं हृदयाय नम इत्यादि । तथा च निबन्धे—ब्रह्मरन्ध्रे भ्रुवोर्म्मध्ये नवरन्ध्रेषु च क्रमात् ।
मन्त्रवर्णान्न्यसेन्मन्त्री वाग्भवेनाङ्गकल्पना ॥१॥ इति ।

ततो ध्यानम्—वाणीं पूर्णनिशाकरोज्वलमुखीं कर्पूरकुन्दप्रभां
चन्द्रार्द्धाङ्कितमस्तकां निजकरैः सम्बिभ्रन्तीमादरात् ।
वीणामक्षगुणं सुधाढ्यकलशं विद्यां च तुङ्गस्तनीं
दिव्यराभरणैर्विभूषिततनुं हंसाधिरूढां भजे ॥ १ ॥

एवं ध्यात्वा मानसैः सम्पूज्य शङ्खस्थापनं कुर्य्यात् । ततः पीठपूजां विधाय केशरेषु मध्ये च पूर्वोक्तपीठशक्तीः पीठमनुं च यजेत् । पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजामारभेत् । देव्या दक्षिणे-ॐ संस्कृतायै वाङ्मय्यै नमः, वामे-प्राकृतायै वाङ्मय्यै नमः । ततः—केशरेष्वग्न्यादिकोणे—ऐं हृदयाय नमः, नैरृते-ऐं शिरसे स्वाहा, ऐं शिखायै वौषट्, ईशाने—ऐं कवचाय हुँ, मध्ये—ऐं नेत्रत्रयाय वौषट्, दिक्षु—ऐं अस्त्राय फट् । ततः पत्रेषु पूर्वादि—प्रज्ञायै, मेधायै, श्रुत्यै, शक्त्यै, स्मृत्यै, वागीश्वर्यै, मत्यै, स्वस्त्यै सर्वत्र प्रणवादिनमोऽन्तेन पूजयेत् । ततः पत्रेषु ब्राह्मयाद्याः पूजयेत् ।

तथा च निबन्धे—देव्यास्तु दक्षिणे पूज्या संस्कृता वाङ्मयी शुभा ।
प्राकृता वाङ्मयी पूज्या वामतः सर्वदा शुभा ॥ १ ॥
इष्ट्वा पूर्ववदङ्गानि प्रज्ञाद्याः पूजयेत्पुनः ।
प्रज्ञा मेधा श्रुतिः शक्तिः स्मृतिर्वागीश्वरी मतिः ॥

---

(१) ॐ ह्रीं ऐं ह्रीं ॐ सरस्वत्यै नमः । इति मन्त्रः ॥ ९ ॥

स्वस्ति चेति समाख्याता ब्राह्मयाद्यास्तदनन्तरम् ॥ २ ॥ इति ।
तद्बहिरिन्द्रादीन्वज्रादींश्च पूजयेत् । ततो धूपादि विसर्जनान्तं कर्म्म समापयेत् । अस्य पुरश्चरणं द्वादशलक्षजपः ।
तथाच—जपेद्द्वादशलक्षाणि तत्सहस्रं सितांबुजैः ।
नागचम्पकपुष्पैर्वा जुहुयात्साधकोत्तमः ॥ १ ॥
मन्त्रान्तरं शारदायाम्—
वाचस्पते ऽमृते भूयः प्लव प्लवेतिकीर्त्तयेत् ।
वागाद्यो मनुराख्यातो रुद्रसंख्या(१)क्षरोऽपरम् ॥ १ ॥
अस्य पूजादिकं पूर्ववत् । कराङ्गन्यासस्तु—ऐं अङ्गुष्ठाभ्यां नमः । वाचस्पते तर्जनीभ्यां स्वाहा । अमृते मध्यमाभ्यां वषट् । प्लव अनामिकाभ्यां हुँ । प्लव कनिष्ठाभ्यां फट् । एवं हृदयादिषु ।
तथा च निबन्धे—कुर्य्यादङ्गानि विधिवद्वागाद्यैः पञ्चभिः पदैः ।
ध्यानन्तु—आसीना कमले करैर्जपवटीं पद्मद्वयं पुस्तकं ।
बिभ्राणा तरुणेन्दुबद्धमुकुटा मुक्तेन्दुकुन्दप्रभा ॥
भालोन्मीलितलोचना कुचभरक्लान्ताभवद्भूतये
भूयाद्वागधिदेवता मुनिगणैरासेव्यमानानिशम् ॥ १ ॥
अस्य पुरश्चरणमेकादशलक्षजपः ।
तथाच—रुद्रलक्षं जपेन्मन्त्रं दशांशं जुहुयाद्घृतैः ।
तथाच शारदायां मन्त्रान्तरम्—
तोयस्थं शयनं विष्णोः स केवलचतुर्मुखम् ।
बिन्दुधीशयुतो वह्निर्बिन्दुसत्यात्वमा(२)भृगुः ॥
उक्तानि त्रीणि बीजानि सद्भिः सारस्वतार्थिनाम् ॥ १ ॥
तोयम्—वकारः । विष्णोःशयनमाकारः केवलेन स्वररहितेन ककारेण सह, तेन वाग्भवमितिपर्य्यायः । वस्तुतस्तु—
द्वादशस्वरमुद्धृत्य बिन्दुनादविभूषितम् ॥
बिन्दुनादसमायुक्तं वह्निबीजं समुद्धरेत् ॥ १ ॥
षष्ठस्वरसमायुक्तं द्वितीयं बीजमुद्धरेत् ।
चन्द्रबीजं समुद्धृत्य वारुणं योजयेत्ततः ॥
त्रयोदशस्वरारूढं बिन्दुनादविभूषितम् ॥ २ ॥
इति विश्वसारवचनात् वाग्भवबीजमेव । अस्य पूजा पूर्ववत् । करा-

---

(१) ऐं वाचस्पते ऽमृते प्लव प्लव इतिमन्त्रः ॥ ३ ॥
(२) ए रूं स्वौं इति मन्त्रः ॥ २ ॥

ङ्गन्यासस्तु–द्विरुक्तैस्त्रिभिर्बीजैर्विधेयः । ऐं हृदयाय नमः । रुं शिरसे स्वाहा इत्यादि ।

तथाच निबन्धे—अङ्गानि कल्पयेन्मन्त्री द्विरुक्तैर्जातिसंयुतैः ॥

ध्यानन्तु—मुक्ताहारावदातां शिरसि शशिकलालङ्कृतां वाहुभिः स्वै-
र्व्याख्यां वर्णाक्षमालां मणिमयकलशं पुस्तकं चोद्वहन्तीम् ॥
आपीनोत्तुङ्गवक्षोरुहभवविलसन्मध्यदेशामधीशां
वाचामीडे चिराय त्रिभुवननमितां पुण्डरीके निषण्णाम्॥ १ ॥

अस्य पुरश्चरणं लक्षत्रयजपः ।
त्रिलक्षं प्रजपेन्मन्त्रं जुहुयात्तद्दशांशतः ।
पायसैराज्यसम्मिश्रैः संस्कृते हव्यवाहने ॥ १ ॥

---

## अथ पारिजातसरस्वतीमन्त्राः ।

मन्त्रदेवप्रकाशिकायाम्—

स च प्रणवहृल्लेखासंपुटितो हकारः सकार औकारबिन्दुयुक्तः सरस्वतीङेन्ता(१) नतिश्च ।

अस्य पूजाप्रयोगः—प्रातःकृत्यादि पीठमन्वन्तं विन्यस्य ऋष्यादिन्यासं कुर्यात् । शिरसि कण्वऋषये नमः। मुखे त्रिष्टप्छन्दसे नमः । हृदि पारिजातसरस्वत्यै देवतायै नमः । ततो मातृकान्यासोक्तकराङ्गन्यासं कुर्यात । मूर्द्ध्नि भ्रूमध्ये नेत्रकर्णनासापुटद्वयवदनगुह्यपादेष्वेकादशाक्षरविन्यासः । ततो अङ्गुष्ठाभ्यां नम इत्यादि कराङ्गन्यासान् कुर्यात् । अन्यत्सर्वं पूर्ववत् ।

दक्षिणामूर्तिसंहितायां तु मन्त्रान्तरमाह—
सम्पत्प्रदाया भैरव्या वाग्भवं बीजमालिखेत् ।
तारेण(२)परया देवि सम्पुटीकृत्य मन्त्रवित् ॥
सरस्वत्यै हृदंतोऽयं रुद्रार्णो मनुरीरितः ॥ १ ॥

प्रपञ्चसारे—
आद्यन्तप्रणवशक्तिमध्यसंस्थावाक्भूयो भवति च सरस्वतीङेन्ता ।
नत्यन्ता मनुरयमीशसंख्यावर्णः सम्प्रोक्तो भजमानः पारिजातः॥ १ ॥
दक्षिणामूर्तिरष्यर्षिः गायत्रीच्छन्द ईरीतम् ।
पारिजातेश्वरी वाणी देवताःपरिकीर्तिताः ॥ १ ॥

---

(१) ॐ ह्रीं ह्रौं ॐ ह्रीं सरस्वत्यै नमः । इति मन्त्रः ॥ ३ ॥

(२) ॐ ह्रीं ह्रां ह्रीं ॐ सरस्वत्यै नमः । इति मन्त्रः ॥ १ ॥

तृतीयं च द्वितीयं च बीजं शक्तिश्च तारकम् ।
कीलकं परमेशानि महासारस्वतप्रदा ।
षड्दीर्घस्वरसम्भिन्नबीजेनाङ्गक्रिया मता ॥ २ ॥

ततो ध्यानम्—हंसारूढा हरहसितहारेन्दुकुन्दावदाता
वाणीमन्दस्मितयुतमुखामौलिबद्धेन्दुरेखा ।
विद्यावीणामृतमयघटाक्षस्रजादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ॥ १ ॥

अस्य पूजादिकं पूर्वोक्तैकादशाक्षरीवत् । पुरश्चरणं तु द्वादशलक्ष-जपः । अर्कपुष्पनागचम्पकैर्वा जुहुयात् द्वादशसहस्रकमिति ।

---

## अथ गणेशमन्त्राः ।

अथ वक्ष्ये गणपतेर्म्मन्त्रान् सर्वार्थसिद्धिदान् ।
यज्ज्ञात्वा मानवा नित्यं साधयन्ति मनोरथान् ॥ १ ॥
पञ्चान्तकं शशियुतं बीजं गणपतेर्विदुः। पञ्चान्तकम्–गकारः।

अस्य पूजाप्रयोगः-प्रातःकृत्यादि पीठन्यासान्तं विधाय केशरेषु मध्ये च तीव्रायै, ज्वालिन्यै, नन्दायै, भोगदायै, कामरूपिण्यै, उग्रायै, तेजोवत्यै, सत्यायै, विघ्ननाशिन्यै, तदुपरि मध्ये—सर्वशक्तिकमलासनाय नमः । सर्वत्र प्रणवादिनमोऽन्तेन पूजयेत् ।

तथाच निबन्धे—तीव्राख्या ज्वलिनी नन्दा भोगदा कामरूपिणी ।
उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी ॥ १ ॥
सर्वादिशक्तिकमलासनाय हृदयावधि ।
पीठमन्त्रोऽयमेतेन प्रदद्यादासनं विभोः ॥ २ ॥

तत ऋष्यादिन्यासः—शिरसि गणकऋषये नमः । मुखे—नृचृच्छ-न्दसे नमः । हृदि–गणेशाय देवतायै नमः ।

ततः कराङ्गन्यासाः—गां अङ्गुष्ठाभ्यां नमः । गीं तर्जनीभ्यां स्वाहा । गूं मध्यमाभ्यां वषट् । गैं अनामिकाभ्यां हुं । गौं कनिष्ठिकाभ्यां वौषट् । गः करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिषु । गां हृदयाय नमः इत्यादि ।

तथाच निबन्धे—षड्दीर्घभाजा बीजेन कुर्य्यादङ्गानि षट् क्रमात् ।

ततो ध्यानम्—सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं
दन्तं पाशाङ्कुशेष्टान्युरुकरविलसत् बीजपूराभिरामम् ॥
बालेन्दुद्योतमौलिं करिपतिवदनं दानपूरार्द्रगण्डं ।

भोगीन्द्राबद्धमौलिं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥ १ ॥

एवं ध्यात्वा मानसैः सम्पूज्य शङ्खस्थापनं कुर्य्यात् । ततः पीठपूजां विधाय केशरेषु मध्ये दिक्षु च तीव्रादिपीठमन्वन्तं पूजयेत् । ततो मूलेन मूर्तिं संकल्प्य पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां कुर्य्यात् । कर्णिकायां पूर्वादिदिक्षु—गणाधिपतये गणेशाय गणनायकाय गणक्रीडाय । ततः केशरेषु-अग्निनिर्ऋतिवाय्वीशानमध्ये दिक्षु च गां हृदयाय नम इत्यादि क्रमेण पूजयेत् । पत्रमध्ये पूर्वादि—

वक्रतुण्डमेकदन्तं महोदरगजाननौ ।
लम्बोदराख्यं विकटं विघ्नराजमनन्तरम् ॥
धूम्रवर्णं, दलाग्रेषु—ब्राह्मयाद्याः पुजयेत्ततः ॥ १ ॥

वाक्यन्तु—ॐवक्रतुण्डाय नमः इत्यादिक्रमेण पूजयेत् । दलाग्रेषु ब्राह्मयाद्या मातरः पूज्या । पूर्वादिक्रमेण तद्बहिरिन्द्रादीन् वज्रादींश्च पूजयेत् । ततो धूपादिविसर्जनान्तं कर्म्म समापयेत् । अस्य पुनश्चरणं चतुर्लक्षजपः ।

तथाच—वेदलक्षं जपेन्मन्त्रं दशांशं जुहुयात्ततः ।
मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः ॥ १ ॥
नारिकेलैस्तिलैः शुद्धैः सुपक्वैः कदलीफलैः ।
अष्टद्रव्याणि विघ्नस्य कथितानि मनीषिभिः ॥ २ ॥

निबन्धे मन्त्रान्तरमाह—श्रीशक्तिः स्मरभूविघ्नबीजानि प्रथमं वदेत् ।
ङेन्तं गणपतिं पश्चात् वरान्ते वरदं पदम् ॥ १ ॥
उक्त्वा सर्वजनं मेऽन्ते वशमानय ठद्वयम् ।
अष्टाविंशत्यक्षरो ऽयं ताराद्यो(१)मनुरीरितः ॥२॥

भूबीजमाह—स्मृतिस्थं मांसमौं बिंदुयुक्तं भूबीजमीरितम् ।
स्मृतिः-गकारः,मासम्-लकारः,औ-औकारः,बिन्दुरनुस्वारः,

अस्य पूजाप्रयोगः—

प्रातःकृत्यादि पीठन्यासान्तं विधाय पूर्वोक्तपीठमन्वन्तपीठशक्तीर्विन्यस्य ऋष्यादिन्यासमाचरेत् । शिरसि-गणकऋषये नमः । मुखे-निचृद्गायत्रीछन्दसे नमः । हृदि-गणपतये देवतायै नमः । ततः कराङ्गन्यासौ-ॐ श्रीं ह्रीं क्लीं ग्लौं गं गां अङ्गुष्ठाभ्यां नमः । ॐ श्रीं ह्रीं क्लीं ग्लौं गं गीं तर्जनीभ्यां स्वाहा । ६ गूं मध्यमाभ्यां वषट् । ६ गैं अना-

(१) ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा । इति मन्त्रः ॥ २ ॥

मिकाभ्यां हुँ। ६ गौं कनिष्ठिकाभ्यां वौषट्। ६ गः करतलपृष्ठाभ्यां फट्। एवं हृदयादिषु। केचित्तु-ॐ गां हृदयाय नमः। गीं शिरसे स्वाहेति। तत्तु"षड्बीजस्थस्वबीजेन दीर्घभाजा प्रकल्पयेत्" इतिवचनाद्विशिष्टस्यैव ग्रहणात्।

ततो ध्यानम्—नवरत्नमयं द्वीपं स्मरेदिक्षुरसाम्बुधौ।
तद्वीचिधौतपर्य्यन्तं मन्दमारुतसेवितम्॥ १॥
मन्दारपारिजातादिकल्पवृक्षलताकुलम्।
उद्भूतरत्नछायाभिररुणीकृतभूतलम्॥ २॥
उद्यद्दिनकरेन्दुभ्यामुद्भासितदिगन्तरम्।
तस्य मध्ये पारिजातं नवरत्नमयं स्मरेत्॥ ३॥
ऋतुभिः सेवितं षड्भिरनिशं प्रीतिवर्द्धनैः।
तस्याधस्थान्महापीठेरचिते मातृकाम्बुजे
षट्कोणान्तस्त्रिकोणस्थं महागणपतिं स्मरेत्॥ ४॥
हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसा-
दाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम्।
बीजापूरगदाधनुस्त्रिशिखियुक् चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशान् हस्तैर्वहन्तं भजे॥ ५॥
गण्डपालीगलद्दानपूरलालसमानसान्।
द्विरेफान् कर्णतालाभ्यां वारयन्तं मुहुर्मुहुः॥ ६॥
कराग्रधृतमाणिक्यकुम्भवक्त्रविनिःसृतैः।
रत्नवर्षैः प्रीणयन्तं साधकं मदविह्वलम्॥
माणिक्यमुकुटोपेतं रत्नाभरणभूषितम्॥ ७॥
एवं ध्यात्वा मानसैः सम्पूजयेत्।

अस्य पूजायन्त्रम्—

त्रिकोणं बहिः षट्कोणम् अन्यत्सर्वं मातृकायन्त्रवत्। ततः शङ्खस्थापनं कृत्वा पीठपूजां विधाय पूर्ववत्पीठशक्तीः पीठमनुं च पूजयेत्। पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजामारभेत्। तथा त्रिकोणबाह्ये पूर्वादिचतुर्दिक्षु पूर्वे बिल्ववृक्षाधःश्रियं श्रीपतिं, दक्षिणे वटवृक्षाधः गौरीं गौरिपतिम्, पश्चिमे-पिप्पलवृक्षाधः रतिं रतिपतिम्, उत्तरे-प्रियङ्गुवृक्षाधः-महीं वराहम्, देवताग्रे लक्ष्मीं गणनायकम्। षट्कोणेषु अग्रकोणे-सिद्धिसहितमामोदम्, अग्निकोणे समृद्धिसहितं प्रमोदम्, ईशानकोणे-कान्तिसहितं सुमुखम्, पश्चिमे-मदनावतीसहितं दुर्मुखम्; नैर्ऋते-मदद्रवासहितंविघ्नम्, वायव्ये द्राविणीसहितं विघ्नक-

तारं पूजयेत् । षट्कोणस्योभयपार्श्वयोः—ॐ वसुधासहितशङ्खनिधये नमः । ॐवसुमतीसहितपद्मनिधये नमः । ततः केशरेष्वग्न्यादिकोणेषु मध्ये दिक्षु च-षड्बीजस्थगां हृदयाय नमः इत्यादिना पूजयेत् । ततः पत्रमध्ये-ब्रह्माद्याः संपूज्य । भूगृहे इन्द्रादीन्वज्रादींश्च पूजयेत् । ततो धूपादिविसर्जनान्तं कर्म्म समापयेत् ॥ अस्य पुरश्चरणजपश्चतुश्चत्वारिंशत्सहस्राधिकचतुर्लक्षः ।

तथाच निबन्धे—ध्यायेन्मन्त्रं जपेमन्त्री चतुर्लक्षं समाहितः ।
चतुःसहस्रसंयुक्तं चत्वारिंशत्सहस्रकम् ॥
दशांशं जुहुयाद्द्रव्यैरष्टाभिर्मोदकादिभिः ॥ १ ॥

मन्त्रान्तरमाह—शक्तिरुद्धं निजं बीजं महागणपतिं वदेत् ।
ङेन्तमग्निवधूःप्रोक्तो मन्त्रोऽयं(१)द्वादशाक्षरः ॥ १ ॥

अस्य पूजाप्रयोगः—

प्रातःकृत्यादितीव्रादिपीतशक्तीः पीठमन्त्रसहितपीठन्यासं विधाय ऋष्यादिन्यासं कुर्य्यात् । शिरसि-गणकऋषये नमः । मुखे-निचृद्गायत्रीछन्दसे नमः । हृदि-शक्तिगणाऽधिपतये देवतायै नमः ।

तथाच निबन्धे—गणकः स्यादृषिश्छन्दो गायत्रीनिचृदादिका ।
उदिता देवतातन्त्रे नाम्ना शक्तिगणाधिपः ॥ १ ॥ इति ॥

ततः कराङ्गन्यासः—ह्रीं अङ्गुष्ठाभ्यां नमः । गं तर्जनीभ्यां स्वाहा ॥ ह्रीं मध्यमाभ्यां वषट् । महागणपतये अनामिकाभ्यां हुं । स्वाहा कनिष्ठाभ्यां वौषट् । समुदायमुच्चार्य्य करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिषु ।

तथाच निबन्धे—व्यस्तैः समस्तैर्म्मन्त्रस्य पदैरङ्गानि कल्पयेत् ।

ततो ध्यानम्—मुक्तागौरं मदगजमुखं चन्द्रचूडं त्रिनेत्रं
हस्तैः स्वीयैर्दधतमरविन्दाङ्कुशौ रत्नकुम्भम् ।
अङ्कस्थायाः सरसिजरुचस्तत्वजालम्बिपाणे-
र्द्व्या योनौ विनिहितकरं रत्नमौलिं भजामः ॥ १ ॥

एवं ध्यात्वा मानसैः सम्पूज्य शङ्खस्थापनं कुर्य्यात् ॥ ततः पीठपूजां विधाय तीव्रादिपीठमन्वन्तं पूजयेत् । पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजां कुर्य्यात् ॥ पूर्वोक्तचत्वारिमिथुनानि षट्कोणेषु आमोदादीन् केशरेषु अग्न्यादिकोणेषु मध्यदिक्षु च-ह्रीं हृदयाय नमः । गं शिरसे स्वाहा । ह्रीं शिखायै वषट् । महागणपतये कवचाय हुँ । स्वाहा नेत्रत्रयाय वौषट् । समुदायमुच्चार्य्य अस्त्राय फट् ।

---

(१) ॐ ह्रीं गं ह्रीं महागणपतये स्वाहा । इति मन्त्रः ॥ ९ ॥

पत्रेषु पूर्वादिब्राह्मयादिमातृकास्तद्बहिरिन्द्रादीन् वज्रादींश्च पूजयेत् । ततो धूपादि विसर्जनान्तं कर्म्म समापयेत् । यन्त्रस्तु महागणपतियन्त्रवत् । अस्य पुरश्चरणं लक्षजपः ।

लक्षमेकं जपेद्विद्यां अपूपैस्तद्दशांशतः ।
जुहुयादर्च्चिते वह्नौ दिनेशो देवमर्चयेत् ॥ १ ॥

मन्त्रान्तरमाह—शक्तिरुदूर्ध्वंनिजं(१) बीजं वशमानय ठद्वयम् ।
तारादो मनुराख्यातो रुद्रसंख्याक्षरान्वितः ॥ १ ॥

अस्य पूजा पूर्ववत् । अङ्गमन्त्रस्तु—ॐ अङ्गुष्ठाभ्यां नमः । ह्रीं गं ह्रीं तर्जनीभ्यां स्वाहा । वशं मध्यमाभ्यां वषट् । आनय आनामिकाभ्यां हुँ । स्वाहा कनिष्ठिकाभ्यां वौषट् । समस्तमुच्चार्य्य करतलकरपृष्ठाभ्यां वौषट् । एवं हृदयादिषु । एकेन त्रिभिर्द्वाभ्यां समस्तेन प्रकल्पयेत् ॥ तथाचनिबन्धे—

एकेनादौ त्रिभिर्द्वाभ्यात्रिभिर्द्वाभ्यामनन्तरम् ।
समस्तेनास्त्रमाख्यातमङ्गक्लृप्तिरुदाहृता ॥ १ ॥

एतान्यंगुष्ठादिषु न्यसेत् । ततो ध्यानम्—

हस्तैर्बिभ्रतमिक्षुदण्डवरदौ पाशाङ्कुशौ पुष्कर-
स्पृष्टस्वप्रमदावराङ्गमनया श्लिष्टं ध्वजाग्रस्पृशा ।
श्यामांग्या विधृताब्जया त्रिनयनं चन्द्रार्द्धचूडं जपा-
रक्तं हस्तिमुखं स्मरामि सततं भोगातिलोलं विभुम् ॥ १ ॥

अन्यत्सर्वं पूर्ववत् । अस्य पुरश्चरणजपो लक्षत्रयम् । तथाच—

लक्षत्रयं जपेन्मन्त्रमिक्षुदण्डैर्दशांशतः ।
अपूपैराज्ययुक्तैर्वा जुहुयान्मन्त्रसिद्धये ॥ १ ॥

---

## अथ हेरम्बमन्त्रः ॥

ऊकारयुक्तो गकारः सबिन्दुः(२)प्रणवादिनमोऽन्तश्चतुरक्षरः ।
तथाच निबन्धे—पञ्चान्तको बिन्दुयुक्तो वामकर्णविभूषितः ।

तारादिहृदयं तोऽयं हेरम्बमनुरीरितः ॥ १ ॥
चतुर्वर्णात्मको नृणां चतुर्वर्गफलप्रदः ।
षड्दीर्घभाजा बीजेन षडङ्गानि प्रकल्पयेत् ॥ २ ॥

अस्य गणकऋषिर्गायत्रीच्छन्दो हेरम्बो देवता गकारो बीजं बिन्दुः

---

(१) ॐ ह्रीं गं ह्रीं वशमानय स्वाहा इति मन्त्रः ॥ ९ ॥
(२) ॐ गूं नमः इति मन्त्रः ।

शक्तिः; गां गीं गूं गैं गौं गः, इत्येतैः षडङ्गानि । ततो ध्यानम्—

मुक्ताकाञ्चननीलकुन्दघुसृणच्छायैस्त्रिनेत्रान्वितै-
र्नागास्यैर्हरिवाहनं शशिधरं हेरम्बमर्कप्रभम् ॥
दृप्तं दानमभीतिमोदकरदान् टङ्कं शिरोक्षात्मिकां
मालां मुद्गरमङ्कुशं त्रिशिखकं दोर्भिर्दधानं भजे ॥ १ ॥

एवं ध्यात्वा मानसैः सम्पूज्य शङ्खस्थापनं कुर्य्यात् । गणेशोक्तपीठ-शक्त्यन्तं सम्पूज्य । ॐ हुँ हुँ महासिंहाय गां हेरम्बासनाय नम इति पूजयेत् । तथाच निबन्धे—

प्रणवं कवचद्वन्द्वं महासिंहाय गां ततः ।
हेरम्बेति पदं पश्चादासनाय हृदं ततः ॥
अयमासनमन्त्रः स्यात्प्रदद्यादमुनासनम् ॥ १ ॥

न्यासेऽप्ययं मन्त्रः ॥ तत्र ॐगं इति मन्त्रेण मूर्तिं सङ्कल्पयेत् । तथाच निबन्धे--तारादिविघ्नबीजेन मूर्तिं तस्य प्रकल्पयेत् ।

ततः पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्य्यन्तं विधायावरणपूजामारभेत् । यथा अग्न्यादिकोणे मध्ये दिक्षु च-गां हृदयाय नमः इत्यादिना पूजयेत् । पत्रेषु लोकपालांस्तद्बहिरिन्द्रादीन् वज्रादींश्च पूजयेत् । ततो धूपादिविसर्ज्जनांतं कर्म्म समापयेत् । अस्य पुरश्चरणं त्रिलक्षजपः । तथाच—

लक्षत्रयं जपेन्मन्त्रं दशांशं जुहुयात्ततः ।

होमद्रव्यं पूर्ववत् । मन्त्रान्तरमाह--गं क्षिप्रप्रसादनाय हृदयम् । तथाच—

संवर्तको नेत्रयुतः पार्श्वो वह्न्यासने स्थितः ।
प्रसादनाय हृन्मन्त्रः स्वबीजाद्यद(१)शाक्षरः ।

अस्य पूजाप्रयोगः-प्रातःकृत्यादिपीठन्यासांतं कर्म्म समाप्य ऋष्यादिन्यासं कुर्य्यात् । शिरसि-गणकऋषये नमः । मुखे-विराट्छन्दसे नमः । हृदि-क्षिप्रप्रसादनाय देवतायै नमः । एकाक्षरवत् कराङ्गन्यासं कृत्वा ध्यायेत्--

पाशांकुशौ कल्पलतां विषाणं दधत्सुशुण्डाहितबीजपूरः ।
रक्तस्त्रिनेत्रस्तरुणेन्दुमौलिर्हारोज्वलो हस्तिमुखोऽवताद्वः ॥ १ ॥

एवं ध्यात्वा मानसैः सम्पूज्य शंखस्थापनं कुर्यात् । ततः पीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पांजलिदानपर्यन्तं विधायावरणपूजामारभेत् । अग्न्यादिकोणेषु-गां हृदयाय नमः । इत्यादिना पूजयेत् ।

---

(१) गं क्षिप्रप्रसादनाय नमः इतिमन्त्रः ॥ १ ॥

तथाच निबन्धे--

अङ्गानि पूर्वमभ्यर्च्य विघ्नानष्टौ यजेत्ततः ।
पत्राग्रे पूजयेदेता ब्राह्मयाद्यास्तदनन्तरम् ।
पत्रेषु-विघ्नं विनायकं शूरं वीरं वरदसंज्ञकम् ।
इभवक्त्रं चैकरदं लम्बोदरं च पूजयेत् ।

पत्राग्रे ब्राह्मयाद्यास्तद्बहिरिन्द्रादीन्वज्रादींश्च पूजयेत् । ततो धूपादि विसर्ज्जनान्तं कर्म्म समापयेत् । अस्य पुरश्चरणं लक्षजपः । तथाच--

लक्षं जपेज्जपस्यान्ते जुहुयादयुतं तिलैः ।
मधुरत्रितयैर्वापि द्रव्यैरष्टाभिरीरितैः ॥ १ ॥

---

## अथ हरिद्रागणेशमंत्राः ।

पंचांतको धरासंस्थो विन्दुभूषितमस्तकः ।
एकाक्षरो महामन्त्रः सर्वकामफलप्रदः ॥ १ ॥

ग्लौं इति मन्त्रः ।

अस्य वसिष्ठऋषिर्गायत्रीछन्दो हरिद्रागणपतिर्देवता गकारो बीजं लकारः शक्तिर्बीजेनैव षडङ्गकम् । ध्यानन्तु—

हरिद्राभं चतुर्बाहुं हरिद्रवसनं विभुम् ।
पाशांकुशधरं देवं मोदकं दन्तमेव च ॥ १ ॥

एवं ध्यात्वा गणपतिं पूजयेत् । आवरणपूजाविनियोगादिकमेकाक्षरगणपतिवत् । अस्य पुरश्चरणं चतुर्लक्षजपः । त्रिमधुयुक्तहरिद्राचूर्णमिश्रितैरयुतहोमः । तन्त्रान्तरे—

मन्त्रोद्धारं प्रवक्ष्यामि शृणुष्व कमलानने ! ।
इन्द्रबीजं समुद्धृत्य निजबीजं समुद्धरेत् ॥ १ ॥
चतुर्द्दशस्वरेणाढ्यं बिन्दुभूषितमस्तकम् ।
एकाक्षरी महाविद्या कथिता पद्मयोनिना । २ ॥

अस्य पूजादिकं सर्वं महागणपतिवत् । करांगन्यासस्तु स्वबीजेन दीर्घषट्कयुक्तेन । अस्य भेदान्तरम्—

लक्ष्म्याद्यां वा कूर्च्चाद्यां वा मायाद्यां वा जपेत्सुधीः ।
कामाद्यां वधूबीजाद्यां वागाद्यां वा जपेत्सदा ॥ १ ॥
ॐकाराद्यां महाविद्यां निजबीजान्तिकां तथा ।
द्व्यक्षरी च महाविद्या त्र्यक्षरी चास्त्रसंयुता ॥ २ ॥
चतुर्वर्णात्मिका विद्या वह्निजायावधिः प्रिये ! ।

एषा विद्या महाविद्या त्रैलोक्ये च सुदुर्लभा ॥
चतुर्वर्गप्रदा साक्षान्महापातकनाशिनी ॥ २ ॥
एतेषां पूजादिकं महागणपतिमंत्रवत् ।

---

अथ उच्छिष्टगणेशमन्त्राः ।

हस्तिपिशाचिलिखे स्वाहा । अस्य पूजा प्रातःकृत्यादिगणेशोक्तपीठन्यासान्तं कर्म्म समाप्य ऋष्यादिन्यासं कुर्यात् । शिरसि कंकोलऋषये नमः । मुखे-विराट्छन्दसे नमः । हृदये-उच्छिष्टविनायकाय देवतायै नमः । द्वाभ्यां त्रिभिः द्वयेन द्वाभ्यां समस्तेन वा च पञ्चाङ्गानि न्यस्य ध्यायेत् ।

चतुर्भुजं रक्ततनुं त्रिनेत्रं पाशाङ्कुशौ मोदकपात्रदन्तौ ॥
करैर्दधानं सरसीरुहस्थमुन्मत्तमुच्छिष्टगणेशमीडे ॥ १ ॥

इति ध्यात्वा मानसैः सम्पूज्य शङ्खस्थापनं कुर्यात् । ततः पीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पाञ्जलिदानपर्यन्तं विधायावरणपूजामारभेत । अग्न्यादिकोणेषु दिक्षु चाङ्गानि पूजयेत् । ततः पत्रेषु ब्राह्मयाद्याः सम्पूज्य दशसु दिक्षु वक्रतुण्डाय नमः । एकदंष्ट्राय० । लम्बोदराय० । विकटाय० । धूम्रवर्णाय० । विघ्नाय० । गजाननाय० । विनायकाय० । गणपतये० हस्तिदन्ताय नमः । तत इन्द्रादीन वज्रादींश्च पूजयेत् ॥ ततो धूपादिविसर्जनान्तं कर्म्म समापयेत् ॥ अस्य पुरश्चरणे लक्षजपः । तिलैर्दशांशहोमः ।

---

अथ वक्ष्ये श्रियो मन्त्रान् श्रीसौभाग्यफलप्रदान् ।
अस्याः कटाक्षमात्रेण त्रैलोक्यमपि वर्द्धते ॥ १ ॥

अथ लक्ष्मीमन्त्राः—

वान्तं वन्हिसमारूढं वामनेत्रेन्दुसंयुतम् ।
बीजमेतच्छ्रियः प्रोक्तं सर्वकामफलप्रदम् ॥ १ ॥

अस्य पूजाप्रयोगः—प्रातःकृत्यादिपीठन्यासांतं कर्म्म विधाय ऋष्यादिन्यासं कुर्यात् । शिरसि-भृगुऋषये नमः । मुखे-निचृच्छंदसे नमः । हृदि-श्रीदेवतायै नमः । केशरेषु मध्ये च-ॐ विभूत्यै नमः । एवं उन्नत्यै, कान्त्यै, सृष्ट्यै, कीर्त्यै, सन्नत्यै, व्युष्ट्यै, उत्कृष्ट्यै, ऋद्ध्यै । ततः-श्री कमलासनाय नमः इत्यासनं पूजयेत् । तथाच निबन्धे—

विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिश्च सन्नतिः ।
व्युष्टिरुत्कृष्टिरृद्धिश्च संप्रोक्ता नव शक्तयः ॥ १ ॥

ततः करांगन्यासं कुर्य्यात्। आं अङ्गुष्ठाभ्यां नमः इत्यादि। एवं आं हृदयाय नमः इत्यादिना च न्यसेत्। तथाच निबन्धे—

अङ्गानि दीर्घयुक्तेन रमाबीजेन कल्पयेत्।

ततो ध्यानम्—

कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजै-
र्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम्।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्वलां
क्षौमाबद्धनितम्बबिम्बललितां वन्देऽरविंदस्थिताम्॥१॥

एवं ध्यात्वा मानसैः संपूज्य शंखस्थापनं कुर्य्यात्। ततः पीठपूजां विधाय केशरेषु मध्ये दिक्षु च विभूत्यादिपीठमन्वन्तं विधाय पुनर्ध्यात्वाहनादिपञ्चपुष्पांजलिदानपर्य्यंतं विधायावरणपूजामारभेत्। तद्यथा—अग्न्यादि केशरेषु मध्ये दिक्षु च-श्रां हृदयाय नमः इत्यादिना संपूज्य, दिग्दलेषु पूर्वादि ॐ वासुदेवाय नमः। एवं संकर्षणाय, प्रद्युम्नाय, अनिरुद्धाय, विदिग्दलेषु-ॐ दमकाय नमः। एवं सलिलाय, गुग्गुलवे, कुरुण्टकाय, ततो देव्या दक्षिणे—ॐ शङ्खनिधये नमः। एवं वसुधायै, वामे-पद्मनिधये नमः। एवं वसुमत्यै, पत्राग्रेषु पूर्वादि-ॐ बलाक्यै नमः, एवं विमलायै, कमलायै, वनमालिकायै, बिभीषिकायै, मालिकायै, शांकर्य्यै, वसुमालिकायै, तद्बहिरिन्द्रादीन् वज्रादींश्च पूजयेत्। ततो धूपादिविसर्जनांतं कर्म्म समापयेत्। अस्य पुरश्चरणं द्वादशलक्षजपः। तथाच-

भानुलक्षं जपेन्मन्त्रं दीक्षितो विजितेन्द्रियः।
तत्सहस्रं च जुहुयात्कमलैर्मधुरोक्षितैः॥ १॥
जपान्ते जुहुयान्मन्त्री तिलैर्वा मधुराप्लुतैः।
बिल्वैः फलैर्वा जुहुयात्त्रिभिर्वा साधकोत्तमः॥ २॥

मन्त्रान्तरम्—

वाग्भवं वनिता विष्णोर्माया मकरकेतनः।
चतुर्बीजात्मको मन्त्रश्चतुवर्ग(१)फलप्रदः॥ १॥

अस्य पूजादिकं पूर्ववद्बोद्धव्यम्॥ तथाच—

रमायाः कल्पिते पीठे तद्विधानेन पूजयेत्।
कुर्य्यात्प्रयोगाँस्तत्रस्थान् मूले साधकसत्तमः॥
निधिभिः सेव्यते नित्यं मूर्तिमद्भिरुपस्थितैः॥ १॥

(१) ऐं श्रीं ह्रीं क्लीं इति मन्त्रः॥

ध्याने तु विशेषः । यथा—

माणिक्यप्रतिमप्रभां हिमनिभस्तुङ्गैश्चतुर्भिर्गजै-
र्हस्ताग्राहितरत्नकुम्भसलिलैरासिच्यमानां सदा ।
हस्ताब्जैर्वरदानमम्बुजयुगाभीतिर्दधानं हरेः ।
कान्तां काङ्क्षितपारिजातलतिकां वंदे सरोजासनाम् ॥ १ ॥

अस्य पुरश्चरणजपो द्वादशलक्षजपः ।

तथाच—भानुलक्षं हविष्याशी जपेदन्ते सरोरुहैः ।
जुहुयादरुणैः फुल्लैस्तत्सहस्रं जितेन्द्रियः । ॥ १ ॥

मन्त्रान्तरमाह—नमः कमलान्तेवासिन्यै ठ(१)द्वयं स्वाहा इयमिति प्रोक्तो दशाक्षरः । तथाच निबन्धे—

दिंघीयादिर्विसर्गान्तो ब्रह्माभानुर्वसुंधराः ।
वान्तेसिन्यै प्रियावन्हेर्मनुः प्रोक्तो दशाक्षरः ॥ १ ॥

अस्य पूजा पूर्ववत् । पीठमन्वन्तं विन्यस्य ऋष्यादिन्यासं कुर्य्यात् । शिरसि—दक्षऋषये नमः । मुखे—विराट्छन्दसे नमः । हृदि-श्रियै देवतायै नमः । तथाच शारदायाम्—

ऋषिर्दक्षो विराट्छंदो देवताः श्रीः प्रकीर्तिता ।

ततः कराङ्गन्यासौ—ॐ देव्यै नमो अङ्गुष्ठाभ्यां नमः, ॐ पद्मिन्यै नमस्तर्जनीभ्यां स्वाहा । ॐ विष्णुपत्न्यै नमो मध्यमाभ्यां वषट् । ॐ वरदायै नमोऽनामिकाभ्यां हुं । ॐ कमलायै नमः कनिष्ठाभ्यां फट् । एवं देव्यै नमो हृदयाय नमः इत्यादि । तथाच निबन्धे—

देव्यै हृदयमाख्यातं पद्मिन्यै शिर ईरीतम् ।
विष्णुपत्न्यै शिखा प्रोक्ता वरदायै तनुछदम् ॥
अस्त्रं कमलरूपायै नमोऽन्ता प्रणवादिका ॥ १ ॥

ततो ध्यानम्—

आसीना सरसीरुहे स्मितमुखी हस्ताम्बुजैर्बिभ्रती
दानं पद्मयुगाभये च वपुषा सौदामिनीसन्निभा ॥
मुक्ताहारविराजमानपृथुलोतुंगस्तनोद्भासिनी
पायाद्वः कमला कटाक्षविभवैरानन्दयन्ती हरिम् ॥ १ ॥

एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कृत्वा पूर्वोक्तपीठशक्ति-सहितपीठमन्वन्तां पूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पांजलिदान-पर्यन्तं विधायावरणपूजामारभेत । अग्न्यादिचतुष्के दिक्षु च-ॐदेव्यै नमो हृदयाय नमः । ॐपद्मिन्यै नमः शिरसे स्वाहा । ॐविष्णुपत्न्यै

---

( १ ) नमः कमलवासिन्यै स्वाहा । इति मन्त्रः ॥

नमः शिखायै वषट् । ॐवरदायै नमः कवचाय हुं । ॐकमलरूपाय नमो ऽस्त्राय फट् ॥ ततः पूर्वादिदलेषु पूर्ववत् वलाक्यादि पूजयेत्, तद्बहिरिन्द्रादीन्वज्रादींश्च पूजयेत् । ततो धूपादिविसर्जनान्तं कर्म समापयेत् । अस्य पुरश्चरणजपो दशलक्षः ।

तथाच—दशलक्षं जपेन्मन्त्रं मन्त्रविद्विजितेन्द्रियः ।
दशांशं जुहुयान्मन्त्री मधुराक्तैः सरोरुहैः ॥ १ ॥

---

## अथ महालक्ष्मीमन्त्राः ॥

ततो वाग्भवमायाकामह्रौ जगत्प्रसूत्यै नमः ।

तथाच—वाग्भवं शम्भुवनिता रमामकरकेतनः ।
तार्तीयं च जगत्पार्श्वो वह्निबीजसमुज्वलः ॥ १ ॥
अर्धीशाढ्यो भृगुरत्यै हृन्मन्त्रोऽयं द्वादशाक्षरः ।
महालक्ष्म्याः समुद्दिष्टस्ताराद्यः सर्वसिद्धिदः ॥ २ ॥

अस्य पूजाप्रयोगः—प्रातःकृत्यादि श्रीबीजोक्तपीठन्यासं विधाय ऋष्यादिन्यासं कुर्य्यात् । शिरसि ब्रह्मऋषये नमः । मुखे-गायत्रीछन्दसे नमः । हृदि-महालक्ष्म्यै देवतायै नमः । ततो मूलेन करौ संशोध्य अङ्गुष्ठादिक्रमेण प्रत्येकं तारादिनमोऽन्तानि पञ्चबीजानि न्यसेत् । यथा-ॐऐं नमः । ॐ ह्रीं नमः । ॐश्रीं नमः । ॐक्लीं नमः । ॐह्रौं नमः ॥ ॐजगत्प्रसूत्यै नमः । ततो मस्तकादिचरणान्तं यावन्मूलेन व्यापकं कुर्य्यात् । ततो मूर्द्धास्यहृदयगुह्यपादेषु पञ्चबीजानि न्यसेत् । शेषाक्षराणि हृदये सप्तधातुषु । तथाच निबन्धे—

हस्तौ संशोध्य मूलेन तारादिहृदयान्तकम् ।
बीजानां पञ्चकं न्यस्येदंगुलीषु यथाक्रमम् ॥१॥
मन्त्रशेषं न्यसेन्मन्त्री तलयोरुभयोरपि ।
मूद्र्धादिचरणं यावन्मन्त्रेण व्यापकं न्यसेत् ॥२॥
मूद्र्धास्यवक्षोगुह्यांघ्रौ पञ्च बीजानि विन्यसेत् ।
शेषान्न्यसेत्सप्तवर्णान् हृदये सप्तधातुषु ॥ ३ ॥

ततः करांगन्यासौ—ऐं ज्ञानायांगुष्ठाभ्यां नमः । ह्रीं ऐश्वर्य्याय तर्ज्जनीभ्यां स्वाहा । श्रीं शक्तये मध्यमाभ्यां वषट् । क्लीं बलाय अनामिकाभ्यां हुं । ह्रौं वीर्याय कनिष्ठाभ्यां वौषट् । जगत्प्रसूत्यै नमस्तेजसे करतलपृष्ठाभ्यां फट् । एवं हृदयादिषु ।

तथाच निबन्धे—अङ्गानि पञ्चभिर्बीजैरस्त्रं शेषाक्षरैर्भवेत् ।

ज्ञानैश्वर्य्यादिभिर्युक्तैश्चतुर्थ्यन्तैः सजातिभिः ॥ १ ॥
ज्ञानमैश्वर्य्यशक्ती च बलवीर्य्यैः सतेजसी ।
ज्ञानैश्वर्य्यादयः प्रोक्ताः षट् क्रमादङ्गदेवताः ॥ २ ॥

ततो ध्यानम्—

बालार्कद्युतिमिन्दुखण्डविलसत्कोटीरहारोज्वलां
रत्नाकल्पविभूषितां कुचनतां शालेः करैर्म्मंजरीम् ॥
पद्मं कौस्तुभरत्नमप्यविरतं संबिभ्रतीं सस्मितां
फुल्लांभोजविलोचनत्रययुतां ध्यायेत्परामम्बिकाम् ॥१॥

विस्तारेण तु शारदायां द्रष्टव्यम् । एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कुर्य्यात् । श्रीबीजोक्तपीठपूजां विधाय पुनर्ध्यात्वावाहनादिपञ्चपुष्पांजलिदानपर्य्यंतं विधायावरणपूजामारभेत् । यथा देव्या दक्षिणे—ॐशङ्करनन्दनाय नमः । एवं वामे-पुष्पधन्वने । अग्न्यादिकोणेषु मध्ये दिक्षु च ऐं ज्ञानाय नम इत्यादिना पूजयेत् । तथा च शारदायाम्—

पूजयेद्दक्षिणे पार्श्वे देव्याः शंकरनंदनम् ।
अन्यतः पुष्पधन्वानं पुष्पाञ्जलिकरं यजेत् ।
अङ्गानि पूर्वमुक्तेषु स्थानेषु विधिवद्यजेत् ॥ १ ॥

पत्रेषु पूर्वादि—ॐउमायै नमः । एवं श्रियै, सरस्वत्यै, दुर्गायै, धरण्यै, गायत्र्यै, देव्यै, उषायै । दक्षिणे—जन्हुसुतायै । वामे-सूर्य्यसुतायै । तथा पुनर्द्दक्षिणे-शङ्खनिधये । पुनर्वामे—पद्मनिधये, पश्चिमे धृतातपत्रं वरुणं पूजयेत् । तद्बाह्ये-गजानैरावतपुण्डरीकवामनकुमुदांजनपुष्पदन्तसार्वभौमसुप्रतीकान् पूजयेत् । तथाच निबन्धे—

जन्हुसूर्य्यसुते पूज्ये पादप्रक्षालनोद्यते ।
शङ्खपद्मनिधी पूज्यौ पार्श्वयोर्धृतचामरौ ॥ १ ॥
धृतातपत्रं वरुणं पूजयेत्पश्चिमे ततः ।
संपूज्य राशीन् परितो यजेदथ नवग्रहान् ॥ २ ॥
अर्च्चयेद्दिग्गजान् दिक्षु चतुर्द्दन्तविभूषितान् ।
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥

पुष्पदन्तः सार्वभौमः सुप्रतीकश्च ते क्रमात् ॥ ३ ॥

तत इन्द्रादीन्वज्रादींश्च संपूज्य धूपादिविसर्ज्जनांतं कर्म्म समापयेत् । अस्य पुरश्चरणं द्वादशलक्षजपः ।

तथाच—भानुलक्षं जपेन्मन्त्रं जुहुयात्सघृतैस्तथा ।
जुहुयाच्छ्रीफलैः पद्मैः प्रत्येकमयुतद्वयम् ॥
तर्पयेत्सलिलैः शुद्धैः सुगन्धैरयुतद्वयम् ॥ १ ॥

अयुतद्वयमित्यत्र वाचनिकव्यवस्था । मन्त्रान्तरमाह—

शम्भुपत्नी श्रियारूढा कमौ भगवती मही ।
ब्रह्मादित्यो धरादीर्घालक्षादिर्भगवान्मरुत् ॥ १ ॥
प्रसीदयुगलं भूयश्श्रीरुद्धा भुवनेश्वरी ।
महालक्ष्मीनमोऽन्तः स्यात्प्रणवादिर(१)यं मनुः ॥ २ ॥

मही—लकारः, भगवती-एकारवती, ब्रह्मा—ककारः, आदित्यो—मकारः, धरा—लकारः, दीर्घा आकारयुक्ता, लक्षादिर्लकारः, मरुत्-यकारः एकारयुक्तः ।

अस्य पूजाप्रयोगः—प्रातः कृत्यादि पूर्वोक्तऋष्यादिन्यासं करांगन्यासौ च कुर्यात् । श्रीं ह्रीं श्रीं कमले श्रीं ह्रीं श्रीं अङ्गुष्ठाभ्यां नमः । श्रीं ह्रीं श्रीं कमलालये श्रीं ह्रीं श्रीं तर्जनीभ्यां स्वाहा । श्रीं ह्रीं श्रीं प्रसीद श्रीं ह्रीं श्रीं मध्यमाभ्यां वषट् । श्रीं ह्रीं श्रीं प्रसीद श्रीं ह्रीं श्रीं अनामिकाभ्यां हुं । श्रीं ह्रीं श्रीं महालक्ष्मी श्रीं ह्रीं श्रीं कनिष्ठाभ्यां फट् । एवं हृदयादिषु । तथाच निबन्धे—

कमले हृदयं प्रोक्तं शिरः स्यात्कमलालये ।
शिखा प्रसीद तेनैव कवचं चतुरक्षरैः ॥
अस्त्रमेतैः पदैः कुर्यात् त्रिबीजपुटितैः क्रमात् ॥ १ ॥

ततो ध्यानम्—

सिन्दूरारुणकान्तिमब्जवसतीं सौन्दर्य्यवारांनिधिं
कोटीराङ्गदहारकुंडलकटीसूत्रादिभिर्भूषिताम् ॥
हस्ताब्जैर्वसुपात्रमब्जयुगलादर्शौवहंतीं परा-
भावीतां परिचारिकाभिरनिशं ध्यायेत् प्रियां शार्ङ्गिणः॥१॥

एवं ध्यात्वा मानसैः संपूज्य शंखस्थापनं कुर्य्यात् । पूर्ववत्पीठपूजां विधाय पुनर्ध्यात्वावाहनादिपंचपुष्पांजलिदानपर्य्यन्तं विधायावरणपूजां कुर्यात् । केशरेष्वग्न्यादिकोणमध्ये दिक्षु च श्रीं ह्रीं श्रीं कमले-श्रींह्रींश्रीं हृदयाय नम इत्यादिना पूजयेत् । दलमूले-पूर्वादि श्रीधराय नमः । एवं हृषीकेशाय, वैकुण्ठाय, विश्वरूपाय संकर्षणाय वासुदेवाय प्रद्युम्नाय अनिरुद्धाय । दलमध्येषु भारत्यै, पार्वत्यै, चान्द्र्यै शच्यै दमकाय सलिलाय गुग्गुलवे कुरुण्टकाय । दलाग्रे—

अनुरागं विसम्वादं विजयं वल्लभं मदम् ।
हर्षं बलं तेज इति लक्ष्मीबाणान्प्रपूजयेत् ॥ १ ॥

---

(१) ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः । इति मन्त्रः ।

श्रीमद्वेदव्यासविरचिता

# श्रीपुराणसंहिता

सम्पादकः—पुरातत्त्वविशेषज्ञ आचार्य-श्रीकृष्णप्रियाचार्यः।

अयि निगमागम पुराणसंहितायामलरहस्यज्ञाः षट्त्रिंशत्तत्त्वेभ्योऽक्षरस्य ब्रह्मणो ब्रह्मसूत्रगीतस्य सकलप्रशासकस्य परात्परस्य कस्यचन निगमनिगूढतत्त्वस्य बहोः कालाज्जिज्ञासुकाश्शैवशाक्तवैष्णवसिद्धानामनन्यत्र तत्त्वार्थदिदृक्षोत्कलिकान्तःकरणास्तत्र-भवन्तो विद्वन्मूर्द्धन्या महानुभवाः। वेदविभागभारतपुराणोपपुराणब्रह्मसूत्राणि प्रणीय भगवता व्यासेन किमपि ग्रन्थान्तरं प्राणायि न वेति "अक्षरात्परतः परः" इति श्रुतेः कः किल भगवदवधारितोऽविरुद्धस्तात्त्विकोऽर्थ इति नाद्यावधि साधु निर्णीतं विदित-चरं वेति सुविदितमेव विद्वदपश्चिमानां शास्त्ररसिकानामत्रभवतां भवताम्। प्रागुक्त-समस्तशङ्कातमीनिराशे शरद्राकाचन्द्रिकायमाणं शैवशाक्तवैष्णवसम्मतानां तत्त्वाना-मपूर्वसमन्वयादर्शभूतं लोकोपकृतये भगवद्वेदव्यासप्रणीतं समस्ततत्त्वनिष्कर्षनिर्देशकं **"पुराणसंहिता"**ख्यं ग्रन्थरत्नं मणीनां कौस्तुभमिव महर्घतामुपाददत् प्राग्गुप्तं प्रका-शितं प्रकासते। शिव-शिवसंवादरूपेण हस्तामलकवदखिलरहस्यप्रकाशकेऽद्यावधि क्वचनागुप्ते ऽधुनात्र सम्मुद्रिते परमदुर्लभतमे समस्ततत्त्वार्णवामृतायमानेऽमुष्मिन् ग्रन्-रत्ने ज्ञान-विज्ञान-कला-कौशलादिभिस्सह प्राच्यसंस्कृतिसारोऽपि पयसो हैयङ्गवीन-करुणावरुणालयेन श्रीमताऽत्रभवता भगवता व्यासेन लोकालोकाय सरलतमया सरण्या संवर्णितो कस्य हि विदुषो हृदयं नावर्जयतितराम्। ग्रन्थरत्नेऽत्र दृष्टिपथमायाते सर्वतन्त्र-स्वतन्त्र डा॰ म॰ म॰ पण्डितप्रवीणश्रीगोपीनाथकविराजप्रमुखा वाराणसेया विद्वद्वरेण्या अत्र वर्णितविषयैर्विस्मितस्तिमितनयनाश्चित्रीयमाणा इदं ग्रन्थरत्नं पौनःपुन्येन नितरा-मभिष्टुतवन्तः। अदस्सम्पादका श्रीमत्पण्डितप्रकाण्डा श्रीकृष्णप्रियाचार्यमहोदयाः अदसीयप्रस्तावनायां 'सच्चिदानन्द'स्वरूपतत्त्वस्य सरलसरससरण्या समुद्वर्णितः सारः

जां विधाय ...र्णसौरभगुणमावर्तयतितराम्। एवंविधेषु कतिपयेष्वेव ग्रन्थरत्नेषु प्रकाशतेषु

णपूजां कुर्यात्। ...तेषु त्वरितं प्राच्यसंस्कृतिध्वजो ग्रामुद्योतयिष्यतितमामिति नो निश्चलः

श्रींह्रींश्रीं हृदयाय नम इत्थं समे सुरभारतीसेवका ग्रन्थालयाः विद्यालयाः अपरे च

नमः। एवं हृषीकेशाय, वैकुण्ठे विध... ...सि निधाय दुर्लभे महर्घतमे च सर्व-

प्रद्युम्नाय अनिरुद्धाय। दलमध्येषु भारत्यै, पार्वत्यक्षरैः कारितमित्यविलम्बेनैतद्-

काय सलिलाय गुग्गुलवे कुरुण्टकाय। दलाग्रे— ...इति। सर्वसौलभ्यायास्य

अनुरागं विसम्वादं विजयं वल्लभं मदम्। ...ल्यम् ६) मात्रम्।
हर्षं बलं तेज इति लक्ष्मीबाणान्प्रपूजयेत् ॥ १ ॥

---

(१) ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः। इति मन्त्रः।